असाधारणधर्मशून्यत्वे सति तद्गतभूयोधर्मवत्त्वं वा।

स्वनिष्ठात्यन्ताभावप्रतियोगिधर्मसमानाधिकरणभूयोधर्मवत्त्वं वा, त्रिचतुःपञ्चादिभेदेन भूयस्त्वस्याननुगमात्। न च कपिञ्जलवत् त्रितयपर्यवसन्नम्, विसदृशयोरपि हस्तिमशकयोः सादृश्यप्रसङ्गात्।

तदुक्तम्

एवं जातिगुणद्रव्यक्रियाशक्तिषु धर्मतः।
एकैकद्वित्रिसाधर्म्यभेदादेकत्र चित्रता ॥ इति।

अथ व्यावर्त्तकधर्मापेक्षया तद्गतधर्मबाहुल्यं सादृश्यम्। बाहुल्यञ्च त्रिचतुरादिष्वनुगतम्। हस्तिमशकयोस्तु बहुव्यावर्त्तकं, साधारणन्त्वल्पम्। अत एव किञ्चिद्भेदाधिष्ठानं सादृश्यमुच्यत इति चेन्न। व्यावर्त्तकसमसंख्येन, अल्पेन, अगणितेनापि धर्मेण सादृश्यव्यवहारात्।

किञ्च सामान्यानि आश्रयभेदेनाभिन्नानि भवन्ति, सादृश्यन्तु भिन्नम्।

---

प्रभाकरोपाध्यायकृतलक्षणमाह असाधारणेति। न च देवदत्तस्य बाल्यादिभेदेन नानाशरीरेऽतिव्याप्तमिदमिति वाच्यम्। तस्यापि सदृशत्वेनाभिमतत्वात्। स्वेति। यदपेक्षया सादृश्यमभिमतं स्वपदेन तदभिमतम्। अत्यन्ताभावपदं व्याप्यवृत्त्यत्यन्ताभावपरम्। तेन संयोगादिकमादायाभेदे न सादृश्यव्यवहार इति भावः। हस्तीति। त्रिचतुरादिषु बहुत्वेनानुगमे हस्तिमशकादिष्वपि सादृश्यव्यवहारः स्यादित्यर्थः।

उक्ताननुगमे[५५] संवादमाह तदुक्तमिति। एकत्र धर्मिणि सादृश्यस्य चित्रतायां हेतुमाह जातीत्यादि। जात्यादिषु तुल्यधर्मेषु सत्सु जात्यादीनामेकैकभेदाद् द्विभेदात्त्रिभेदात् सामस्त्यभेदादित्यर्थः[५६]। त्रित्वमात्रपर्यवसाने चैतद् विरोधः[५७] स्यात्। विचित्रव्यवहाराभावप्रसङ्गादिति भावः। तथा च त्रित्वमात्रपर्यवसाने इदमपि बाधकमवधेयम्[५८]।

व्यावर्त्तकेति। व्यावर्त्तकं गवयत्वादिकम्। तदपेक्षया गवादिगतधर्मबाहुल्यं सादृश्यम्। हस्तिमशकस्थले[५९] तु मशके न तथेति नातिप्रसङ्ग इत्यर्थः। स्वोक्तोपजीव्यमाह अत एवेति। भेदेति[६०]। भेदपदं भेदकधर्मपरम्। तथा च भेदकधर्मसमानाधिकरणं तद्गतधर्मबाहुल्यं सादृश्यमिति समायातमिति भावः। तथा न सिद्धमतो दोषान्तरमाह अल्पेनेति।

सिंहावलोकनन्यायेन सामान्यघटितपूर्वलक्षणे दूषणमाह किञ्चेति। यद्वा सामान्यपदं अनेकवृत्तिधर्ममात्रपरम्[६१]। न च तथापि निष्प्रतियोगिकत्वदूषणा-

सामान्यं निष्प्रतियोगिकं तदनिरूप्यञ्च । सादृश्यन्तु सप्रतियोगिकं तद्धी-व्यङ्ग्यञ्च ।

अथ भेदे सति तद्गतभूयःसामान्यवत्त्वं सादृश्यम्, भेदश्च प्रत्याश्रय-मन्यः सप्रतियोगिकश्चेति चेत् ? तर्हि सादृश्यस्य भेदघटितत्वेन सावधित्वे 'तस्मात् सदृशः' इति स्यात्, न तु 'तेन तस्य वा सदृशः' इति । न च सादृश्यस्यापि सप्रतियोगिकत्वेन 'तस्मात् सदृशः' इति स्यात् । सावधौ हि तथाप्रतीतिप्रयोगौ, न तु प्रतियोगिनि, अभावेऽपि घटाद् इति प्रतीतिप्रसङ्गात् ।

अपि च तद्धर्मवत्त्वं यदि सादृश्यं तदा तत्-तद्भिन्नतयोः सङ्करः स्यात् । तद्धर्मवत्ता हि तत्ता, तदन्या च तद्वत्ता । यदि च तत्रैव तद्वत्ता तदा 'तदेव तद्वद्' इति स्यात् । तथा च तद्धर्मवत्ताप्रत्यभिज्ञानवत् 'सोऽयम्' इति स्यात्, न तु 'तद्वदयम्' इति । एवं तद्वत्त्वैव हि तत्तेति गवयेऽपि गोबुद्धिव्यपदेशौ स्याताम्, गोगतसामान्ययोगित्वेन गोवत्तत्ताश्रयत्वात् ।

---

सङ्गतिः[६२], तद्गतबहुधर्मवत्त्वज्ञाने[६३] तस्य गवादेर्ज्ञानस्यावश्यकत्वादिति वाच्यम् । तथापि हि सादृश्यं यावद्धर्मघटितं[६४] तावतः स्वप्रतियोगिकत्वं[६५] नास्तीत्यभिप्रायः । यद्वा तद्गतेत्यत्र गोर्विशेषणत्वेऽपि प्रतियोगित्वं नास्तीत्यभिप्रायः ।

अनुपदोक्तदोषोद्धाराय[६६] शङ्कते अथेति[६७] । स्वरूपभेदाभिप्रायकम् । यद्वा गोस्वरूपमाश्रयमुपेत्य गवयस्वरूपमाश्रयमभिप्रेत्य[६८] चेदं तथा च[६९] गोभिन्नत्वे सति गोगतबहुधर्मवत्त्वं[गो]सादृश्यम् । एवमन्यत्रापि तेनाभेदे न सादृश्यमिति भावः । भूयस्त्वसामान्यपक्षोक्तदूषणानि[७०] विहायान्यद्[७१] दूषणमाह तर्हीति । तस्मादिति । तस्माद् भिन्न इति वदित्यर्थः । न च्विति ।

ननु 'तस्माद् भिन्नोऽयम्' इति तदा कथं स्यादिति चेत्[७२] । तत्र[७३] भेदपदस्या-भावभिन्नार्थत्वाद्, भवतु वा तद् यथाकथञ्चित्, तथापि 'तेन सदृश.' इति न स्यादेव ।

अपि चेति । ननु भेदघटिततद्गतभूयःसामान्यवत्त्वं[७४] सादृश्यं न तु तद्धर्म-वत्त्वमात्रम्[७५] । तथा च नोक्तदोषसङ्गतिरिति चेन्न । तद्धर्मवत्त्वमात्रं सादृश्यमित्यभि-प्रायेणास्य दोषस्योत्थानात् । विपक्षे बाधकमाह[७६] यदि चेति । उक्तमेव विशेष्य-निष्ठतयोपसंहरति एवमिति । गोबुद्धीति । नन्वेतदयुक्तम् । गोत्वाभावे कथं तथाबुद्धि-व्यपदेशोपादानमिति चेन्न[७७] । यदि तत्तातद्वत्तयोरभेदस्तदभिप्रायेणास्याभिधानात्[७८] ।

नापि विशेषः, प्रत्यक्षत्वात्। न समवायः, वृत्तिमत्त्वादित्यधिकं सादृश्यम्।

यत्तु सादृश्यं भावोऽभावो वा, भावोऽपि सगुणं निर्गुणं वा, निर्गुणमपि आश्रितमनाश्रितं वा, आश्रितमपि सामान्यवत् निःसामान्यं वा, सामान्यवत्त्वे स्पन्दोऽस्पन्दो वा, निर्गुणं निःसामान्यम् आश्रितम्, एकाश्रितम्, अनेकाश्रितं वा इति यथायथं सप्तपदार्थान्तर्गतमिति। तन्न। व्यवहारानुपपत्त्या तद्बहिर्भावात्। अन्यथा एतादृशविकल्पेन सामान्य-विशेष-समवायानामपि द्रव्यादित्रयसाधर्म्यात् तत्तदन्तर्भावः स्यादिति।

उच्यते। असाधारणान्यतद्गतभूयोधर्मवत्त्वं तत्सादृश्यम्। यद् जात्यादिसाधारणं भेदाघटिततया च निरवधि तद्गतबहुधर्मवत्त्वं तन्निरूप्यमिति, इतरनिरूप्यत्वमेव तस्य सप्रतियोगिकत्वम्। तवापि सादृश्ये

---

नापि विशेष इति। यद्यपि परमते न विशेषः सिद्धः *तथापि पररीत्येदमभिहितम्। वृत्तिमत्त्वादिति। समवायः स्वरूपसम्बन्धेनापि न वर्त्तत इति मत[७९] इदम्। यद्वा वृत्तिमत्त्वात् समवेतत्वादित्यर्थस्तेन न[८०] व्याप्यत्वासिद्धिः[८१]। आचार्यः परिशेषं दूषयितुमुपन्यस्यति यत्त्विति। तदुक्तम्

परस्परविरोधे हि न[८२] प्रकारान्तरस्थितिः।
नैकता च विरुद्धानामुक्तिमात्रविरोधतः[८३] ॥ इति।

सगुणं द्रव्यमेव, अनाश्रितं[८४] निर्गुणं भावस्वरूपं समवाय एव, निर्गुणमाश्रितं सामान्यवच्च[८५] गुणभिन्नं कर्मैव नान्यदिति। तद् दूषयति तन्नेति। विपक्षे[८६] बाधकमाह[८७] अन्यथेति[८८]। एतादृशपरिशेषस्य सर्वत्र सुलभत्वेनाभासत्वादिति[८९]।

सादृश्यं पदार्थान्तरं दूषयितुमाह उच्यत इति। असाधारणान्येति। ननु गौरपि गोसदृशः स्यात् तत्रापि असाधारणान्यभूयोधर्मसत्त्वादिति चेन्न। असाधारणान्यमात्रतद्गतभूयोधर्मवत्त्वं[९०] तदित्यर्थान्तरम्[९१]।

नन्विदं तत्सदृशं तद्गतभूयोधर्मवत्त्वे सति तद्भिन्नत्वादित्यभेदे गम्यगमकभावो न स्यादिति चेत्, इष्टापत्तेः, अवच्छेदकभेदाद् वा। अत एव सहप्रयोगान्यथानुपपत्तिरतिरिक्तसादृश्यसाधिकेत्यपास्तम्[९२]।

भेदाघटितेति। 'तस्माद् भिन्नः' इत्यत्र 'तस्य भिन्नः' इति कदाप्यदर्शनात्। 'तस्माद् दीर्घः' इतिवदस्यापि पञ्चम्यभिधीयमानप्रतियोगिकत्वम्[९३] अक्षतम्[९४]। पृथक्त्वादौ च[९५] सावधित्वमन्यदेव ध्येयम्।

तदेव सप्रतियोगिकत्वम्, न तु भेददीर्घादिवत् सावधित्वम्, 'तस्मात् सदृशः' इति प्रत्ययापत्तेः। बहुत्वञ्च त्रिचतुरादिसाधारणमिति नाननुगमः, न चातिप्रसङ्गः, हस्तिमशकयोरपि प्राणित्व-सुखित्व-दुःखित्वादिना सादृश्यात्।

अत एव वैसादृश्येऽपि आह्लादजनकत्वादिना 'चन्द्र इव मुखम्', पुष्ट्यादिना 'महिषीव गौः' इति बह्वल्पतद्गतधर्मवत्त्वेन सुसदृशत्वमन्दसदृशत्वम्। अत एव गवये गोसादृश्यं पृष्टः तद्धर्मवत्त्वमेव विवेचयति। 'वराहं गावोऽनुधावन्ति' इत्यत्र गोसादृश्यं वराहेऽप्युक्तम्। तद्धर्मवत्त्वेनोपमानोपमेयव्यवहारः काव्यादौ, साध्यसाधनवत्तामात्रेण दृष्टान्ते पक्षसादृश्यवाचकवति प्रयोगः परीक्षकाणाम्।

न चैते गौणाः, मुख्ये बाधकाभावात्। तस्मात् केनचिद् धर्मेण कस्यचित् क्वचित् सादृश्यवत्त्वमननुगतमस्ति।

किञ्च यादृशबहुतद्धर्मवत्त्वज्ञानं सादृश्यव्यञ्जकं तदेव तद्व्यवहारनियामकमस्तु, किमधिकेन ? अन्यथा त्रिचतुरादित्वे तु व्यञ्जकमपि बहु-

---

यद्वा 'तस्माद् भिन्नः' इत्यादावपि 'तस्मात् पृथगयम्' इत्यर्थो न स्वभावमादाय[९६] प्रतियोगितादिः। नानुगम इति। न च भूयः[९७] पदवैयर्थ्यं तस्य ज्ञाने सत्येव[९८] सादृश्यव्यवहारात्।

अत्रार्थेऽन्येषामपि सम्मतिं दर्शयति अत एवेति। साध्यसाधनवत्तेति[९९]। ननु साध्यसाधनवत्तयोर्धर्मयोर्बहुत्वाभावात्[१००] कथं तद्धर्मवत्त्वेन सादृश्यव्यवहार इति चेन्न। भूयस्त्वस्य एकभिन्नत्वे तात्पर्यात्। न च बहुत्वं त्रिचतुःसाधारणमिति[१०१] ग्रन्थविरोध इति वाच्यम्। तस्यापि एकभिन्नत्वतात्पर्यकत्वात्[१०२]।

अननुगतमिति[१०३]। ननु सादृश्यपदमेवं[१०४] नानार्थं स्यादिति चेत्, प्रमापदवददोषात्। न च महिषादावपि गवयशब्दवाच्यत्वापत्तिः[१०५], गवयत्वसमानाधिकरणसादृश्यमादाय तत्र बोधनादेवमन्यत्रापि नेयम्। किञ्चेति। न चैवं गोत्वादिकमपि जातिर्न सिध्येद् व्यञ्जकेनान्यथासिद्धत्वादिति वाच्यम्। तत्र साक्षात्सम्बद्धधर्मबाधकाभावात् जातिसिद्धेः। प्रकृते च तथा बाधकसत्त्वादितिभावः[१०६]। अननुगमदोषोद्धारभारो[१०७] न ममेति गूढाभिसन्धिं प्रत्याह अन्यथेति। अभिसन्धिमुद्घाट्य[१०८] शङ्कते व्यञ्जकमिति। प्रमाचतुष्टयव्यञ्जकमननुगतमेवेति भावः। प्रत्यक्षाद्यवान्तरजातीये तत्राप्यननुगम एवेति परिहरति नेति[१०९]। उक्ततुल्यतया शङ्कते

धर्मवत्त्वमननुगतं स्यात् । व्यञ्जकमननुगतमपि वह्नौ प्रत्यक्षादिवदिति चेन्न । तत्राभिव्यक्तीनां वैजात्यात् । धूमालोकादौ वह्निव्याप्यत्वमेवानुगतम् । अत्रापि तद्व्याप्यत्वमस्तीति चेत्, तर्हि यादृशं तद्व्याप्यत्वं तदेव तद्व्यवहारनिमित्तम् । न च तद्गतबहुधर्मवत्त्वं न व्यञ्जकमेव, अनुभवविरोधात्, तद्गतभूयोधर्मस्य बह्वल्पत्वज्ञानं विना सुसदृश-मन्दसदृशत्वज्ञानाभावाच्च ।

अथ तद्गतबहुधर्मवत्त्वं न सप्रतियोगिकम्, सादृश्यन्तु न तथेति व्यवहर्त्तव्यसाधकमिति चेन्न । सादृश्यवत् तस्यापि सप्रतियोगिकत्वात् ।

यत्तु तत्ता-तद्वत्तयोः सङ्करः स्यादिति, तन्न । तत्रैव तद्धर्मवत्ता तदभेदो वा तत्ता, सा च सोऽयमिति प्रत्यक्षज्ञाने भासते, भेदे भासमाने तदन्यस्मिन् तद्धर्मवत्ता तद्वत्ता यतो भवति 'तद्वदयम्, न तु सः' इति तयोर्भेदात् ।

---

तत्रापीति[११०] । तद्व्याप्यत्वं सादृश्यव्याप्यत्वम् । उत्तरयति[१११] तर्हीति । न च न्यायनये सादृश्याभावे[११२] तद्व्याप्यत्वेनानुगमस्य वक्तुमशक्यत्वमिति वाच्यम्, तवापि सादृश्यव्याप्यत्वमात्रेण नानुगमः,किन्तु तत्र सादृश्यव्याप्यत्वे नान्यथा[११३], यज्ञदत्तसादृश्यव्याप्यवत्त्वज्ञाने[११४] विष्णुमित्रसादृश्यप्रत्ययप्रसङ्गात् । तथा[११५] च स एवानानुगम इत्यत्र तात्पर्यात्[११६] । सादृश्यातिरिक्ततापक्षे व्यञ्जकं नावश्यं स्वीकार्यं येनोक्तदोषः स्यादित्याशङ्क्य निराकरोति अनुभवेति । सादृश्यानुभवदशायां[११७] तद्गतभूयोधर्मवत्त्वज्ञानस्यानुभवसिद्धत्वात् । प्रत्युत तदतिरिक्तस्याननुभव एवेत्यर्थः[११८] । अनुभवविरोधमेवोपपादयति[११९] तद्गतेति । यद्वा स्वातन्त्र्येणानुभवविरोधरूपदूषणमुक्त्वा[१२०] अपरं दूषणमाह तद्गतेति ।

भूयोधर्मवत्त्वमात्रं सादृश्यमित्यभिप्रायेण शङ्कते अथेति । 'तद्गतेति' विशेषणसत्त्वात् सादृश्यस्य तद्गतभूयोधर्मवत्त्वरूपस्य[१२१] सप्रतियोगिकत्वसत्त्वान्न[१२२] दोष इत्यभिप्रायवान् परिहरति[१२३] नेति[१२४] । पूर्वोक्तसङ्करदोषं[१२५] निराकर्तुमाह यत्त्विति । निराकरोति[१२६] तन्नेति[१२७] । तत्ताऽभावे[१२८] भेदो[१२९] भासते इत्यभिप्रायेणाह तदभेदो[१३०] वेति । भेदे इति । तथा च तदसाधारणधर्मशून्यत्वे सति तद्गतभूयोधर्मवत्त्वं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं[१३१] वा[१३२] सादृश्यम्, अनतिरिक्तपदार्थस्वरूपम्, न तत्तारूपमिति[१३३] भावः ।

**नन्वेवं व्यक्त्यन्तरे गोत्वग्रहे 'तद्गोवदियम्' इति स्यात्, न तु 'इयमपि गौः' इति चेन्न। गोत्वमात्रस्य तदन्यव्यक्तिवृत्तित्वसमुच्चयात्, एकत्र नानासम्बन्धानवगमात् तद्गोवृत्तिबहुधर्मज्ञाने भवत्येव 'तद्गोवदियम्' इति।**

**तथापि 'अयमपि शृङ्गादिमान्' इति समुच्चयधीः स्यात्, न तु 'गो सदृशः' इति चेन्न। एकत्रोभयसम्बन्धः समुच्चयः, अन्यगतभूयोधर्मवत्त्वमन्यत्र सादृश्यमिति विवेकात्।**

**नवीनास्तु विलक्षणसुखद्वये इतरसकलव्यावृत्तं सादृश्यमनुभूयते। न तु तदुभयमात्रवृत्तिजातिरस्ति, तदुभयाभावे जातेरनाश्रयत्वेनानित्यत्वप्रसङ्गात्। नापि जन्यं धर्मान्तरमस्ति इत्यधिकं सादृश्यमुपेयम्। तथापि समानधर्मवत्त्वं व्यञ्जकं विना कथं तत्र सादृश्याभिव्यक्तिरिति चेन्न। प्रतीतिबलात्, द्रव्ये तथा गुणादौ तु व्यभिचारात्। अत एव न व्यञ्जकेनान्यथासिद्धिः, तदभावेऽपि सादृश्यानुभवादिति।**

---

यदि वा अन्यत्र तद्धर्मवत्ता तद्वत्ता[१३४] तदा पूर्वानुभूतगोव्यक्तिभिन्ने गवि लक्षणसत्त्वात् 'गोवत्' इति स्यात्। न हि 'गौर्गोवत्' इति धीव्यवहारौ स्तः, किन्तु 'इयं तद्भिन्ना गौः' इत्येव धीरिति शङ्कते नन्वेवमिति[१३५]। सादृश्यप्रतियोगितावच्छेदकरहिते एव तद्धर्मवत्ता तद्वत्तोक्ता, यत्र[१३६] गोत्वं प्रतियोगितावच्छेदकं तदा नास्त्येव व्यक्त्यन्तरे[१३७] लक्षणम्, केवलं व्यक्त्यन्तरे गोत्वसम्बन्धावगमाद्[१३८] 'इयमपि गौः' इति समुच्चय एवेत्याह गोत्वेति। तद्गोत्वं[१३९] प्रतियोगितावच्छेदकं चेत् तदा तथाज्ञानादिकं भवत्येवेत्याह तद्गोवृत्तीति[१४०]।

यद्यनेकवृत्तित्वग्रहे समुच्चयस्तदा शृङ्गित्वादिबहुधर्मस्यापि गोगवयाद्यनेकसम्बन्धावगमाद् गवयेऽपि 'अयमपि शृङ्गादिमान्' इति समुच्चयः परमेव[१४१] स्यादित्याह तथापीति। एकत्रेति। यदा[१४२] प्रतियोगितावच्छेदकगोत्वाभावसंवलितोक्तज्ञानं[१४३] तदा सादृश्यधीरन्यथा तत्रापि समुच्चयधीरेवेति भावः। ननु 'गोभिन्नोऽयं शृङ्गादिमान्[१४४] गवयो[१४५] गोसदृशः' इति सहप्रयोगो भेदे[१४६] कथं स्यादिति चेत्, न[१४७], कथञ्चित् 'मधुकरो भ्रमरः' इतिवत्[१४८] मूढप्रबोधपरत्वाद् वा।

नवीनाः। प्राभाकरनवीनाः[१४९]। इतरेति। तत्साधारणधर्मव्यावर्तनाय। तथा च सुखद्वयमात्रवृत्तिसादृश्यग्रहे भवदुक्तव्यवहारकारणाभावाद् अतिरिक्तसादृश्यं व्यञ्जकं विनापि ग्राह्यमित्यन्यत्रापि[१५०] न तेनान्यथासिद्धिरिति[१५१] भाव्यम्[१५२]। जातिरिति। ननु यथा देवदत्ताभावे देवदत्तत्वं[१५३] कालादौ वर्तते तथा सा

तत्तुच्छम् । विलक्षणसुखद्वयं न सुखमात्रहेतुजन्यं सुखान्तरस्यापि तादृशत्वापत्तेः, किन्तु विलक्षणादृष्टजन्यम् । तच्चादृष्टं विहिततद्धेतुक्रिया-विशेषानुष्ठानादन्येषामप्यस्तीति तेषामपि तादृशानि सुखानि भवन्तीति तेषु कारणविशेषप्रयोज्या विलक्षणजातिरस्ति । तस्माज्जीवानामा-नन्त्यात्, अनादिनिधनत्वात्, उत्पन्नानागतविजातीयं न सुखमस्ति । एवं दुःखादिकार्यान्तरेऽपि, न ह्यनुत्पन्नजातीयम्, अनुत्पत्स्यमानजातीयं वा कार्यमस्ति ।

यच्च व्यक्तिनाशे जातेरनित्यत्वमापादितम्, तदपि न, नाशका-भावात् । अत एव प्रलयेऽपि तदवस्थानम् ।

अपि च एकत्र प्रतियोगिभेदेन सादृश्यं भिन्नम्, नत्वेकम्, सुसदृश-मन्दसदृशव्यवहारात् । तथा च योग्यत्वादेकग्रहे सर्वग्रहप्रसङ्गः । प्रतियोगि-गतभूयोधर्मज्ञानस्य व्यञ्जकस्य क्रमात् क्रमे तदेव व्यवहारनिमित्तमित्युक्तम् ।

किञ्चैवं वैसादृश्यमपि स्यात्, न च सादृश्याभावः, तद्वैपरीत्य-स्यापि सम्भवात् । सादृश्याभावत्वेनैव प्रतीतिः, 'वि'शब्दस्य निषेधा-र्थकत्वादिति चेत्, तर्हि 'गौरिव महिषी' इत्यत्र पावनत्व-क्षीरवत्त्वादिना विवक्षितसादृश्यानाश्रये गवये वैसादृश्यं न स्यात् । न हि तत्र गोसादृश्यं

---

जातिरपि नित्या । तदाश्रयसुखाभावेऽपि कालादौ वर्त्तमाना भवेदिति चेन्न । तादृश-जातेरनुभवसिद्धत्वाभावादित्यस्य बाधकस्य सुलभत्वादिति[१५४] दिक् । जातिरस्तीति । न च तद्गतासाधारणबहुधर्माभावात् कथं सुसदृशत्वव्यवहार इति वाच्यम् । अनेकसाधारणधर्मेण[१५५] सुसदृशत्वव्यवहारसिद्धेरिति[१५६] दिक् । कार्यमस्तीति । नन्वनुत्पन्नजातीय इदानीमनुभवसिद्धो देवदत्तादिरिति[१५७] चेन्न, असिद्धेः । अत एवेति । यद्यपि[१५८] प्रलयः परेण नाङ्गीक्रियते[१५९] तथापि स्वमतावष्टम्भेनेदम् ।

सादृश्ये व्यञ्जकापेक्षा नास्ति, येन तेनान्यथासिद्धिरित्युक्तं तद्दूषयितुमाह अपि चेति । तथा च[१६०] व्यञ्जकापेक्षावश्यकत्वे[१६१] तेनैवान्यथासिद्धिः[१६२] न पदार्थान्तरं सादृश्यमुपेयमिति[१६३] भावः । यदि सादृश्यं पदार्थान्तरं स्वीकार्यं तदा वैसादृश्यमपि[१६४] पदार्थान्तरं किमिति* न स्यादिति प्रतिवन्दिमाह किञ्चैवमिति । शङ्कते सादृश्येति । विनिगमकमाह विशब्दस्येति । सादृश्याभावो यदि वैसादृश्यं‡ तदा गवये[१६५] सादृश्याभावसत्त्वे सादृश्यं न स्याद्, विरोधादित्याह तर्हीति । ननु किञ्चित्सादृश्याभावो

**तदभावश्च । तस्मात् साधर्म्यवैधर्म्ये सादृश्यवैसादृश्ये । यत्तु तद्वृत्त्यनेकधर्मवत्त्वं सादृश्यम्, तेनाभेदेऽपि**

**गगनं गगनाकारं सागरः सागरोपमः ।**
**रामरावणयोर्युद्धं रामरावणयोरिव ॥**

**इत्यादौ सादृश्यम् । न चैवं गोरपि गोसदृशत्वे गवयपदाभिधेयत्वापत्तिः । तत्र सादृश्यपदस्य विशेषे तात्पर्यात् । अन्यथा महिषेऽति प्रसङ्ग इति ।**

**तन्न । 'तस्य' 'तेन वा' सदृश इति प्रयोगात् । न चाभेदे सम्बन्धः, सहार्थो वा सम्भवति । 'गगनं गगनाकारम्' इत्यादौ तु गगनाद्येव एतादृशधर्मवन्नान्यदित्यत्र तात्पर्यम् ।**

**यद्वा स्थानान्तरीयगगनसागरयोरुपमानत्वम्, तयोर्युद्धविशेषे तयोरेव युद्धान्तरमुपमानमिति ।**

---

वैसादृश्यं न तु सादृश्यसामान्याभाव इत्युपसंहारव्याजेन परिहरन्नाह[१६६] तस्मादिति । तथा च लाघवाद् व्यञ्जकत्वेनावश्यं[१६७] स्वीकार्यत्वात् साधर्म्यवैधर्म्ये एव सादृश्यवैसादृश्ये, न तु पदार्थान्तरे इति भावः ।

कस्यचिन्मतं दूषयितुमुपन्यस्यति यत्त्विति[१६८] । साधकमाह गगनमिति ।

भेदघटितमेव सादृश्यम्, नाभेदघटितमित्यत्र प्रतीतिप्रयोगौ साधकत्वेनाह तस्येति । ननु तवापि सादृश्यस्य तद्भिन्नत्वे सति तदसाधारणधर्मशून्यत्वे सतीति वा तद्गतभूयोधर्मवद्रूपत्वेनेति पृथगनन्वितमिति[१६९] चेन्न[१७०] । उक्तरूपसादृश्यस्यैव[१७१] 'तेन सदृशः' इत्यादिनार्थकथनात् । न[१७२] चाभेद[१७३] इति । यद्यपि केवलान्वयिस्थलेऽभेदेऽपि सम्बन्धस्तथापि तदतिरिक्तस्थलाभिप्रायकमिदम् । ननु 'सुखेन सदृशः' इत्यादौ[१७४] स्वगतधर्माधिकरणं सुखमित्यर्थे एकस्य प्रतियोगित्वानुयोगित्वसत्त्वेऽपि न दोषस्तथापि भेदघटित एव सादृश्यधीप्रयोगावित्यभिप्रायकमिदम्[१७५] । 'गगनम्' इत्याद्यपि न मानम्, अन्यथासिद्धेरित्याह गगनमिति । लक्षणाप्रसङ्गभयादाह यद्वेति । विशेषणभेदाद् विशिष्टं भिन्नमिति मतेनेदं[१७६] । न तु सादृश्यस्य पदार्थान्तरत्वाभावे आह्लादजनकत्वादिना[१७७] धर्मेण 'मुखं श्रीरामचन्द्रस्य चन्द्रसदृशम्' इति न[१७८] प्रयोगः स्यात् पौनरुक्त्येति चेन्न[१७९] । केन धर्मेण तद्गतभूयोधर्मवदिदं मुखमिति जिज्ञासां[१८०] पुरस्कृत्याविशेषेणैवोक्तौ अदोषात्[१८१], 'धान्येन धनी' इतिवदिति दिक् ।

ननु 'अयं देवदत्तस्तदन्यो वा भवतु, तत्सदृशस्तावदयम्' इति भेदाभेदसंशयेऽपि सादृश्यनिश्चयात् अतिरिक्तं सादृश्यमस्त्विति चेन्न। देवदत्तधर्ममात्राभिप्रायेण एकदेशे सादृश्यपदप्रयोगात्। कथमन्यथा 'स एवायं न तु तत्सदृशः' इति, 'तत्सदृशोऽयं न तु सः' इति प्रतीतिप्रयोगौ। न चात्र सदृशपदं भेदमात्रपरमिति युक्तम्, मुख्ये सम्भवति लक्षणाया अत्र अयोगात्। तस्मान्न पदार्थान्तरं सादृश्यमिति।

स्यादेतत्, माभूत् पदार्थान्तरम्, तथापि प्रत्यक्षात् शब्दाद् वा गवये गोसादृश्यज्ञानात् 'गवयसदृशो गौः' इति ज्ञानमुपमितिः। न चैतत् प्रत्यक्षम्, असन्निहितविशेष्यकत्वात्। नानुमानम्, लिङ्गाभावात्। न च गवयगतं सादृश्यं लिङ्गम्, अपक्षधर्मत्वात्।

अथ सदृशद्वयान्तरदर्शने यो यद्गतसादृश्यप्रतियोगी स तत्सदृश इति प्रत्यक्षेण व्याप्तिग्रहे सति गवयगतसादृश्यप्रतियोगित्वात् 'गौर्गवयसदृशः' इत्यनुमितिरिति चेत्, न। व्याप्तिग्रहं विना प्रथममपि प्रत्यक्षात्, शब्दाद् वा गोसदृशं गवयं ज्ञात्वा गवि गवयसादृश्यज्ञानोदयात्। किञ्च

---

अभेदघटितपक्षे दूषिते सति भेदघटितपक्षे संशयो न स्यादित्यतोऽतिरिक्तं[१८२] सादृश्यमित्यत्र समाधत्ते[१८३] देवदत्तेति। सदृशपदं तत्र गौणमित्यर्थः। गौणत्वे साधकमाह अन्यथेति। लक्षणाया अत्रेति[१८४]। ननु पूर्वत्र लक्षणा, अत्र न लक्षणेत्यत्र किं विनिगमकमिति चेत्[१८५]? उक्तयुक्त्या अतिरिक्तसादृश्यनिराकरणाद् अभेदेन सादृश्यपक्षे बाधकस्योक्तत्वाद् अनन्यगत्या पूर्वमत[१८६] एव लक्षणा, नात्र सा, मुख्यत्वसम्भवादिति दिक्। अन्ये तु सम्प्रदायमते विशिष्टवाचकस्य शब्दस्य किञ्चित् परित्यागेन प्रवृत्तावपि[१८७] मुख्यत्वं[१८८] लक्षणेति कृत्वा[१८९] देवदत्तधर्माभिप्रायेण लक्षणा मम मते, तव मते तु सादृश्यस्य पदार्थान्तरत्वे[१९०] प्रकृते भेदपरत्वे[१९१] लक्षणैवेति वदन्ति[१९२], तच्चिन्त्यम्। स्वोक्तमुपसंहरति[१९३] तस्मादिति।

सादृश्यस्य पदार्थान्तरत्वाभावेऽपि प्रकारान्तरेणोपमानं व्यवस्थापयितुं शङ्कते स्यादेतदिति। प्रत्यक्षे कदाचित् समानसंवित्संवेद्यत्वं[१९४] सम्भाव्यते[१९५], न शब्दे इति कृत्वाह शब्दाद् वेति। व्याप्तिग्रहं[१९६] विनेति। आपातत इदमुक्तम्। वस्तुतो व्याप्तिग्रहं विनैवम्भूता[१९७] धीर्नास्तीत्यग्रे[१९८] वक्ष्यति। किञ्चेति। गवयनिरूपितगोनिष्ठसादृश्यस्य तदा ज्ञानाभावेन साध्याप्रसिद्धेरित्यर्थः। सामान्यव्याप्त्या-

गवि गवयसादृश्यं न साध्यम्, प्रथमतस्तदप्रतीतेः। गवयगतसादृश्यप्रतियोगित्वञ्च गवि न प्रत्यक्षम्, विशेष्यस्यासन्निकर्षाद्, इति नानुमितिगम्यम्। तल्लिङ्गस्यापि तद्गतत्वेनाप्रत्यक्षस्य लिङ्गान्तरगम्यत्वेनानवस्थानात्।

न च गौरेतद् गवयसदृशः, गवयगतभूयोऽवयवादिसामान्यवत्त्वात्, गवयान्तरवदिति वाच्यम्। गवयान्तराज्ञानेऽपि गवि गवयसदृशत्वप्रत्ययात्। अत एव गवि गवयगतगोसादृश्यं गोगतगवयसादृश्यं विनानुपपद्यमानं तत् कल्पयति। न हि 'गोसदृशो गवयः', 'एतद्विसदृशी गौः' इति वाच्यमिति निरस्तम्। गवयनिरूपितगोसादृश्याप्रसिद्धौ तेन विनानुपपत्तिज्ञानाभावात्।

किञ्च तवार्थापत्तिर्व्यतिरेक्यनुमानम्। न च गवयगतसादृश्यप्रतियोगित्वं गवि प्रत्यक्षादिना ज्ञातुं शक्यमित्युक्तम्।

नन्वेवं करभे गोवैधर्म्यज्ञानाद् गवि करभवैधर्म्यज्ञानमपि मानान्तरात् स्यादिति चेन्न। गवि करभवैधर्म्यं यदि करभवृत्तिधर्माभाववत्त्वम्,

---

वपि[199] विशेषणीभूतगवयसादृश्यज्ञानं[200] भवन्मते[201] आवश्यकं वाच्यमिति भावः। ननु त्वन्मते तादृशसादृश्यज्ञानाभावात्[202] कथमुपमितिः स्यादिति चेन्न। तन्मते विशिष्टज्ञाने विशेषणज्ञानस्याहेतुत्वादिति भाव्यम्। गवयगतेति। यद्यपि परेण सादृश्यमेवोपमेयमित्युक्तं[203] तत्रेदमर्थान्तरम्, तथापि अभ्युपगमवादेनेदमुत्तोलितम्। विशेष्यस्येति[204]। गोविशेष्यकतादृशप्रतियोगित्वज्ञानं न प्रत्यक्षेण, विशेष्यस्य गोरसन्निकर्षात्। तल्लिङ्गस्येति[205]। तत्प्रतियोगित्वसाधकलिङ्गस्य[206]। भूयोऽवयवेति। अत्र[207] गवयान्तरे साध्यप्रसिद्धेरेतदभिन्नत्वे[208] सतीति हेतोर्विशेषणं[209] बोध्यम्। तेन एतद्गवये न व्यभिचारः। न[210] चातिरिक्तसादृश्याभावे उक्तहेतुरूपमेव सादृश्यं वाच्यम्, तदा हेतुग्रहे गृहीतमिति न साध्यतेति वाच्यम्, प्रतियोगिनिष्ठासाधारणधर्मशून्यत्वघटितसादृश्यस्य हेतुग्रहकालेऽसिद्धेः। गवयेति[211]। तथा च[212] व्याप्तिज्ञानाभावान्नानुमितिरिति[213] भावः। अत्र पक्षे हेतुविशेषणकज्ञानमपि अनुमितिकारणं न सम्भवतीति बोध्यम्। स्वमतसिद्धार्थापत्तिस्तद्गम्यतामिति[214] निराचष्टे अत एवेति। उपपाद्याप्रसिद्ध्या दूषयति गवयेति।

न्यायसिद्धकेवलव्यतिरेकित्वं तत्र यद्, तदपि दूषयति किञ्चेति। यद्यन्मानगम्यं[215] तत्तद् भवता[216] न वाच्यम्। तदा तवानेन[217] न्यायेनात्र[218] प्रमाणान्तरत्वमुपनेयमिति शङ्कते[219] नन्वेवमिति। प्राङ्नास्तितेति[220] भट्टमतमवलम्ब्येदं

तदा स्मृते गवि प्रागस्तितावद् अनुपलब्धिगम्यमेव। अथ करभावृत्तिधर्मवत्त्वम्, तदा गोधर्मा गवि गृहीता एव। इदानीं स्मृतगोधर्माणां करभेऽभावमात्रमधिकं गम्यम्, तच्च प्रत्यक्षादेव। अथ तत्प्रतियोगिकैतन्निष्ठसादृश्ये भासमाने समानसंवित्संवेद्यतया एतत्प्रतियोगिकतन्निष्ठसादृश्यं वैधर्म्यञ्च ज्ञातमेवेति चेन्न। विशेषणविशेष्यप्रतियोगिभेदेन समानसंवित्संवेद्यत्वासिद्धेः, 'एतत्सदृश एतद्विधर्मा सः' इत्येतद्विशेष्यकप्रत्ययानुदयाच्च, तद्विशेष्यकप्रत्यक्षे तत्सन्निकर्षस्य हेतुत्वात्। ननु प्रत्यक्षे विशेष्यसन्निकर्षो हेतुर्न तु यावद्विशेष्यसन्निकर्षः, गौरवात्। अन्यथा अतीतानागतवर्तमानव्याप्यविशेष्यकव्याप्तिप्रत्यक्षं न स्यादिति चेन्न। अतीतानागतविशेष्ये सामान्यलक्षणायाः सत्त्वात्।

अथ गवयसादृश्यं गवि गवयगतशृङ्गित्वादिसामान्यवत्त्वम्, तच्च गवये गोसादृश्ये भासमाने गवि भातमेव।

---

न च सादृश्येऽप्येवम्[२२१], तस्य भावत्वादिति भावः। तदेति। तथापि[२२२]करभव्यावृत्तधर्मवत्त्वं वैधर्म्यमिति भावः[२२३], नानुपलब्धिगम्यस्तदर्थं मानान्तरं वाच्यमिति दूषयितुं शङ्कते अथेति। तच्चेति। नन्वेतदयुक्तम्। 'गौरेतद्विधर्मा' इति गोविशेष्यकवैधर्म्यज्ञानं कुतः स्यादिति चेन्न[२२४]। एतस्यापातत उक्तत्वात्। अस्य मते 'गौरेतद्विधर्मा' इति ज्ञानस्योपमितित्वात्। शङ्कते अथेति। सादृश्य[२२५] इत्युपलक्षणं[२२६] वैधर्म्यमित्यपि[२२७] बोध्यम्। एतज्ज्ञानेन[२२८] तत्संशयाभावेन समानसंवित्संवेद्यतेति[२२९] भावः। विशेषणेति। गवयभिन्नत्वघटितगवयगतभूयोधर्मवत्त्वरूपस्य गवयसादृश्यज्ञानेनाविषयीकरणादिति[२३०] भावः। विशेष्यसन्निकर्षाभावेन न तथाधीरित्याह एतदिति। न[२३१] त्वेतद्[२३२] दूषणं तस्य मतेऽपि 'एतद्विधर्मा सः' इति प्रतीतेरन्यथोपपादयितुमशक्यत्वात्[२३३]। तथा च प्रमाणान्तरं विना न परस्य[२३४] निस्तार[२३५] इति चेत्? एतस्य मते एतस्याप्युपमानत्वादिति व्यभिचारमुद्धरति अतीतेति। ननु गौरवमुक्तमिति चेन्न। यदि हि यद्विशेष्यकप्रत्यक्षं तदिन्द्रियसन्निकर्षो हेतुर्न वक्तव्यः। तदा घटसन्निकर्षेणासन्निकृष्टपटग्रहणप्रसङ्ग[२३६] इति भाव्यम्।

अथ गवयेति। यद्यपि अथेत्यादिनेदमाशङ्कितं निराकृतञ्च तथापि पूर्वमभेदघटितसादृश्यमभिप्रेत्य परेण दूषितं सम्प्रति भेदघटितं[२३७] न सादृश्यमित्यभिप्रायेण शङ्कितम्।

यद्वा गोगतशृङ्गित्वादेर्गवयगतत्वं गवये गोसादृश्यम्, एवं तस्यैव गवयगतस्य गोगतत्वं गवि सादृश्यम्, तच्चेन्द्रियेणैव ज्ञातम्, सामान्यस्यैकत्वेनेन्द्रियसन्निकृष्टत्वात्, 'अयं सः' इति विपरीतप्रत्यभिज्ञायामिवेति चेत् ? सत्यम् । गोविशेष्यकगवयगतशृङ्गित्वादिज्ञानं नेन्द्रियजन्यम्, गोरसन्निकर्षात् । तस्मात् 'एतत् सदृशः', 'एतद्विधर्मा', 'एतस्माद् दीर्घः सः' इति ज्ञानं नानुमानात्, विशेष्यासन्निकर्षे तद्गतबहुलिङ्गाज्ञानात् ।

एवञ्च सप्रतियोगिकपदार्थज्ञाने तत्प्रतियोगिकपदार्थज्ञानमुपमानमिति प्राहुः, प्रत्यक्षादिकं विना अर्थादर्थान्तरज्ञानं पूर्वेषामुपमानात् ।

विगर्हितमेतत् । तथाहि 'परस्परसदृशम्' इत्यादिकं प्रत्यक्षमतो यो यत्सादृश्यप्रतियोगी स तत्सदृश इति सामान्यतो व्याप्तिज्ञाने सति गौर्गवयसदृशः, तत्सादृश्यप्रतियोगिकत्वात्, यथा भ्रातुर्भगिनी । गवयगतसादृश्यप्रतियोगित्वञ्च गोर्गवयगतसादृश्यवित्तिवेद्यमेव, सादृश्ये गोः प्रतियोगित्वेनैव ज्ञानात् ।

---

ननु गोगतं सादृश्यमसन्निकृष्टे[२३८] गवि कथं भासते[२३९] इत्यत[२४०] आह यद्वेति । तथा च गोरसन्निकर्षेऽपि सादृश्यं सन्निकृष्टमिन्द्रियेण गृह्यत इति भावः । अन्ये तु भेदघटितसादृश्यं[२४१] न[२४२] गृह्यत इत्यत आह यद्वेति । तथा च न भेदघटितं सादृश्यमिति भावः । भवतु सादृश्यं सन्निकृष्टम्, तथापि गोरसन्निकर्षे गोविशेष्यकसादृश्यज्ञानं न प्रत्यक्षेण भवितुं युक्तमित्याह सत्यमित्यादि । नन्वेवमनुगतप्रयोजकरूपाभावान्नानाप्रमाणापत्तिरित्यत[२४३] आह एवञ्चेति । तत्र पूर्वेषां सम्मतिमाह प्राहुरिति[२४४] । प्रतियोगिकत्वादिति[२४५] । ननु गोरसन्निकर्षे कथं गोविशेष्यकलिङ्गपरामर्शः स्यादिति चेत्[२४६], पक्षविशेष्यकत्वानियमात्, मनसा वा तथाधीसम्भवात् । न च हेतोर्विशेषरूपेणाज्ञाने[२४७] सामान्यव्याप्त्या न तादृशविशिष्टधीजननसमर्थतेति[२४८] । 'गोसदृशो गवयः' इति प्रतीतौ[२४९] हि[२५०] समानसंवित्सम्भवात्[२५१], तत्सादृश्यप्रतियोगित्वस्यापि[२५२] भावात् । न च हेतुतावच्छेदकरूपेण हेतुज्ञानं न जातमिति वाच्यम् । उत्तरकालं मनसा मानान्तराद् वा तत्सम्भवात्[२५३] । ननु साध्याप्रसिद्धिरिति चेन्न । अत्र[२५४] सामान्यव्याप्तौ पक्षधर्मताबललभ्यसाध्यप्रसिद्धेरनङ्गत्वात् । यद्वा मनसा तद्धीरत एवाग्रे केवलव्यतिरेकीति वक्ष्यति । यत्तु व्यतिरेकानुमाने[२५५] न[२५६] साध्यप्रसिद्ध्यवकाश इति, तत्र प्रकृते भावसाध्यकहेतौ साध्यप्रसिद्धेरङ्गत्वात् ।

अन्यथा सादृश्ये गोरनन्वयापत्तेः । यत्तद्भ्यां सामान्यतोव्याप्तिग्रहं विना 'एतत्सदृशः सः' इति फलासिद्धेः । यत्तद्भ्यां व्याप्तिग्रहेऽस्माकं व्यतिरेकी, परेषामर्थापत्तिरित्यन्यदेतत् । सादृश्यस्योभयवृत्तिधर्मस्य किञ्चिद्विशेष्यसन्निकर्षात् प्रत्यक्षेण ज्ञानम्, यावद्विशेष्यसन्निकर्षस्याप्रयोजकत्वात् । अन्यथा 'अयं सः' इति भ्रान्तविपरीतप्रत्यभिज्ञायां का गतिः ? मनसैव चैतन्निष्ठसादृश्यप्रतियोगित्वग्रहः । प्रत्यक्षविशेष्यकत्वं परामर्शे न प्रयोजकमित्युक्तम् ।

'कीदृशो गवयः' इति जिज्ञासायां 'यथा गौस्तथा गवयः' इति श्रुतोत्तरस्य तथाभूते पिण्डे दृष्टे 'तथा अयम्' इत्यतिदेशवाक्यार्थानुसन्धाने 'अयं गवयपदवाच्यः' इति मतिरुपमानफलम् । न चेयं वाक्यमात्रात्, अप्रत्यक्षीकृतपिण्डस्यापि प्रसङ्गात् । नापि प्रत्यक्षमात्रात्, अश्रुतवाक्यस्यापि

---

न च व्याप्यत्वादिना[२५७] ज्ञानं[२५८] विनोक्तरूपसाध्यज्ञानं[२५९] न[२६०] जायत इत्युपमानं पृथगिति वाच्यम् । यत्रानुमानावसरस्तत्र[२६१] तत एव[२६२], साध्यप्रसिद्धेरावश्यकत्वेन व्याप्त्यादिज्ञानापेक्षाया आवश्यकत्वात्, मानान्तरस्वीकारे गौरवात् । ननु[२६३] यत्त्वं तत्त्वञ्च[२६४] नानुगतं कथमनुमानं स्यादित्यत[२६५] आह[२६६] यत्तद्भ्यामिति । सामान्यतोव्याप्तिरुक्ता[२६७] सम्प्रदायमते[२६८], इदन्तु स्वमते बोध्यम्[२६९] । अत्रेदमवधेयम्[२७०], परस्य[२७१] मते प्रतियोगित्वम्[२७२], तन्मते[२७३] न[२७४] वानुमानं न चोपमानम्[२७५] । न[२७६] च[२७७] गौर्गवयसदृशः, गवयनिष्ठसादृश्यप्रतियोगित्वादित्यादौ[२७८] सादृश्यस्य[२७९] भेदघटितत्वेन भेदप्रतियोगित्वादित्येव[२८०] सार्थकमिति वाच्यम्, मशकादौ[२८१] व्यभिचारात् । न च भेदपदार्थः सादृश्यान्तर्गतो[२८२] व्यर्थ इति वाच्यम्, गवये व्यभिचारवारकत्वादिति[२८३] दिक् । तदेवं परकीयोपमानस्वरूपं[२८४] तत्फलञ्च[२८५] दूषयित्वा स्वाभिमततद्द्वयोपदर्शनाय क्षेत्रमाह 'कीदृशो[२८६] गवयः' इति । इत्थं[२८७] प्रमाणान्तरविलक्षणः[२८८] प्रकारः[२८९] सामग्रीभेदेन[२९०] फलवैजात्यञ्च प्रमाणभेदकं दर्शितम्, गवयत्वेन प्रवृत्तिनिमित्तेन गवयवाच्यत्वानुभवः प्रकृते उपमितिरिति[२९१] तामबुद्ध्वा[२९२] शङ्कते न[२९३] चेति[२९४] । अयमर्थः, गवयपदं स्ववाच्यतोपलक्षकम्[२९५] । तथा च गोसादृश्येन समानजातीयव्यवच्छिन्नपिण्डे शब्दादेव गवयशब्दवाच्यता[२९६] परिच्छिन्ना[२९७], ततः[२९८] प्रत्यक्षेण केवलं 'सोऽयं पिण्डो गवयशब्दवाच्यः'[२९९] इति प्रत्यभिजानातीति[३००] शङ्कार्थः । यथाश्रुतं दूषयति अप्रत्यक्षीकृतेति । केवलं[३०१] शब्दान्न तथा धीः, गवयत्वस्य प्रवृत्तिनिमित्ततानवधारणादिति भावः[३०२] । ननु प्रत्येकं व्यभिचारेऽपि[३०३] समुदित-

प्रसङ्गात्। नापि तयोः समाहारात्। स हि प्रमाणसमाहारो वा फलसमाहारो वा? आद्ये, प्रमाणत्वे सति समाहारः, समाहृतयोर्वा प्रामाण्यम्? नाद्यः, फलानेकत्वे समाहारानुपपत्तेः, तस्य परस्परसहकारिरूपत्वात्। नान्त्यः, वाक्यप्रत्यक्षयोर्भिन्नकालत्वात्। वाक्यतदर्थयोः स्मृतिद्वारोपनयेऽपि समयपरिच्छेदासिद्धेः। फलसमाहारे च तदन्तर्भावे शब्दानुमानयोरपि प्रत्यक्षत्वप्रसङ्गः। तत् किं तत्फलस्य प्रमाणबहिर्भाव एव? अन्तर्भावे वा कियती सा मतिः? तत्तदसाधारणेन्द्रियादिसाहित्यमस्ति? तर्हि सादृश्यज्ञानेऽपि विस्फारितस्य चक्षुषो व्यापारः, तस्मिन् सति तस्यानुपयोगात्। उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वाक्यार्थस्मृतिमतः कालान्तरेऽपि तदनुसन्धानबलात् समयपरिच्छेदोत्पत्तेः।

---

योस्तयोः फलं स्यादित्यत आह नापि तयोरिति। प्रमाणत्व इति। पूर्वं प्रमाणत्वं प्रत्येकं[३०४] विश्रान्तम्, उत्तरत्र मिलिते विश्रान्तमित्यर्थः[३०५]।

फलानेकत्व[३०६] इति[३०७]। प्रमाणत्वं हि प्रत्येकविश्रान्तं[३०८] तथा च फलं प्रत्येकं वक्तव्यम्। तथा च फलानेकत्वे एकफले सहकारित्वरूपः समाहारो[३०९] दण्डादिवन्न[३१०] स्यादित्यर्थः[३११]। शब्देन्द्रिययोर्भिन्नकालत्वेऽपि अर्थस्मृतिद्वारा शब्दस्य, सादृश्यधीद्वारा प्रत्यक्षस्य च तत्र कारणत्वे[३१२] अनुमितिरपि लिङ्गपरामर्शद्वारा चक्षुरादिजन्या स्यात्, वाक्यार्थबुद्धिरपि पदतदनुस्मृतिद्वारा[३१३] श्रोत्रजैव स्यादिति[३१४] शङ्कोत्तराभ्यामाह फलेति। तत् किं प्रत्यक्षफलं प्रत्यक्षे[३१५] नान्तर्भवतीत्याह[३१६] तत्[३१७] किमिति। प्रत्यक्षफलं किं न* प्रमाणम्, निर्विकल्पकं सविकल्पकप्रमाफलकं प्रत्यक्षं+ न स्यात्। यदि तत्रान्तर्भवति[३१८] तदा प्रकृतेऽपि[३१९] कथं तदभाव इति प्रश्नार्थः[३२०]। उत्तरं तत्तदिति। यत्र व्यापारस्येन्द्रियसंयोगादेर्व्यवस्थितिः[३२१] तत्र तत्फलस्य मध्ये व्यापारता। यत्र तु नैवं तत्र प्रत्यक्षप्रमाणबहिर्भाव[३२२] इत्यर्थः। क्वचिदंशे व्यापारं दृष्ट्वा शङ्कते अस्तीति। तस्मिन्निति। तस्मिन् सादृश्यज्ञाने तस्येन्द्रियसन्निकर्षस्य व्यभिचारादिति भावः[३२३]। उपलब्धेति। इन्द्रियव्यापारोपरमे[३२४] यथोक्तसादृश्यज्ञानादिसामग्रीत[३२५] उपमितेरित्यर्थः। अतीन्द्रियधर्मिविषयकोपमित्यभावप्रसङ्गाच्चेति[३२६] भावः। न च यत्रेन्द्रियव्यापारोऽस्ति तत्रोपनीतवाच्यत्वपरिच्छेदः प्रत्यक्षेण[३२७] गवयत्वं प्रवृत्तिनिमित्तीकृत्यास्त्विति वाच्यम्[३२८]। इन्द्रियव्यापारोपरमे यत्रोक्तप्रकारेणोपमितिस्तत्रोपमानस्य प्रमाणत्वे[३२९] स्थिते[३३०] प्रकृतस्थलेऽप्युपमितित्वाविरोधात्[३३१]। न च ज्ञानोपनीतानां मनसेन्द्रियेण परिच्छेदो-

तस्माद् आगमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानम् उपमानप्रमाणमिति जरन्नैयायिका जयन्तप्रभृतयः ।

तन्न । वैधर्म्याव्याप्तेः । यदा औदीच्येन क्रमेलकं निन्दतोक्तं 'धिक् करभमतिदीर्घग्रीवं प्रलम्बचपलौष्ठं कठोरशुकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनाम्' इति, तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गत्वा तादृशं वस्तूपलभ्य 'नूनमसौ करभः' इति प्रत्येति । तत्र किं मानम् ? न तावदुपमानम्, सादृश्याभावात् । न च प्रमाणान्तरं सम्भवति ।

उच्यते । न तावदनुगतं शक्यतावच्छेदकम्, उपलक्षणं वा विना प्रत्यभिज्ञानतः शरीरैकत्ववादिनां शरीरविशेषे चैत्रादिपदवद् अध्यक्षत्वेन शृङ्गग्राहिकतया गवयादिपदशक्तिग्रहः, गवयान्तरेऽपि भावात् ।

---

ऽस्त्विति[३३२] वाच्यम् । एवमनुमानादेरपि विलोपप्रसङ्गात् । अनुमिनोमीत्यनुव्यवसायवदुपमिनोमीत्यनुव्यवसायतुल्यतया[३३३] न प्रत्यक्षान्तर्भाव[३३४] इति दिक् ।

आगमेति । आगमपदं 'गोसदृशो गवयः' इति[३३५] शब्दपरम् ।

न[३३६] चेति । क्लृप्तप्रमाणासम्भवः । अक्लृप्तमतिरिक्तं प्रमाणं नोपेयते । परिशेषेणोक्तप्रकारेणोपमान एव तत्र प्रमाभेदाववक्लृप्तिरिति भावः । ननु निन्दापरवाक्यस्य समयविशेषे तात्पर्याभावान्नोक्तं युक्तमिति वाच्यम् । तात्पर्याभावेऽपि तात्पर्यज्ञानेन प्रकारान्तरेण वा वाक्यार्थपरिच्छेदस्यानुभवसिद्धत्वात् । तात्पर्यसत्त्वे च न विवदेतेति भावः । इदमत्रधेयम्[३३७], यदा 'गोसदृशो गवयः' इत्यादिस्थले गवयशब्दवाच्यता नोपस्थिता शब्दात्[३३८] तदापि गवयादिशब्दस्य[३३९] प्रसिद्धपदसामानाधिकरण्यानुपपत्त्या सामान्यतो गवयशब्दवाच्यत्वं[३४०] ज्ञात्वा पुरुष उपमिनोतीति दिक् । पञ्चविधा[३४१] हि संज्ञा—शृङ्गग्राहिका, पारिभाषिकी[३४२], औपाधिकी, निमित्तसङ्कोचवती, नैमित्तिकी चेति । तत्र गवये गवयत्वनिमित्तपुरस्कारेणोपमानव्यवस्थापनाय पञ्चम्यां संज्ञायामुपमानं प्रकृते निवेशयितुमितरासां स्वरूपं निरूप्य तत्रासम्भवं दर्शयति तत्र न तावदित्यादि । प्रवृत्तिनिमितं वाच्यम्; यद्वा व्यावृत्तत्वे सति वाच्यानधिकरणत्वं नैमित्तिकसंज्ञायामस्ति, उपलक्षणन्तु शक्यपरिचायकमात्रम्, न तु शक्यान्तर्गतम् । एतदेव तटस्थमिति गीयते । एतदुभयमपि शृङ्गग्राहिकास्थले नास्ति, तेन नैमित्तिक्या भेदः । मीमांसकमते चैत्रत्वं न जातिः, अनेकवृत्तित्वाभावादिति बोध्यम्[३४३] । शृङ्गग्राहिकतयेति[३४४] । निमित्तोपलक्षणे विना प्रत्यक्षेणैव व्यावृत्तव्यक्तिविशेषोपस्थितिर्यत्र सैव शृङ्गग्राहिकेत्यर्थः । प्रकृतेऽसम्भवमाह गवयान्तर इति । एकव्यक्तावेव

नाप्यनध्यक्षे गत्यन्तरोपस्थिते परिभाषात आकाशादिपदवत् । तत एवाध्यक्षत्वाच्च उपलक्षणस्य च शक्तौ बहिर्भावाभावात् तद्वदेव ।

नापि योगनिर्वचनात् पाचकादिपदवत् । अन्यथा पचिक्रियानुपहिते पाचकेति प्रयोगो न स्यात् । अतस्तदनुगुणज्ञानादियोगिनि शक्तिः । अवच्छेदकतया तूपलक्षणेऽपीति योगाभावात् । नाप्युपस्थितनिमित्तसङ्कोचनात् स्वर्गादिपदवत्, तदभावात् । अतो गन्धाद्युपलक्षितेन पृथिवीत्वेन निमित्तेन पृथिव्यादिपदवत् सादृश्याद्युपलक्षिते गवयत्वादौ गवयादिपदानां शक्तिरिति तु परमार्थतः । अन्यथा फलस्याभासत्वे मानत्वविरोधात् । न च पूर्वं गवयत्वमुपस्थितम्, उपस्थापकाभावात् । न च गवयपदादेव तदुपस्थितिरन्योन्याश्रयत्वात् । अथ वाक्यादेव अनेन समयः परिच्छिन्नः, केवलमग्रे प्रत्यभिजानाति 'यो गोसदृशो गवयपदवाच्यत्वेन मया अवगतः सोऽयम्' इति नोपमानस्य विषय इति चेन्न । न हि सादृश्यमेव निमित्तम्, अप्रतीतानामव्यवहारप्रसङ्गात्, गौरवाच्च । नापि गवयत्वम्, तदनु-

---

शृङ्गग्राहिकेति ध्येयम् । गत्यन्तरेति[३४५] । प्रत्यक्षापेक्षया गत्यन्तरं यः स शब्दाश्रयः, स आकाशपदवाच्य इति । तटस्थशब्दाद्युपलक्षित इति परिभाषा स्यात् । शृङ्गग्राहिकायामयं देवदत्तशब्दवाच्य इत्यत्रेदन्त्ववदत्र शब्दादिर्न शक्त्यन्तरभूतः । एतादृशी परिभाषैकस्यामेव व्यक्तावित्यभिप्रेत्यासम्भवमाह तत इति[३४६] ।

गवयान्तरेऽपि भावादेव हेत्वन्तरमाह[३४७] अध्यक्षत्वाच्चेति । समुदायशक्त्यभावे दूषणमाह अन्यथेति[३४८] । उपलक्षणेऽपीति । यद्यपि मणिकारनयेन योग्यता[३४९] शक्या तथापि सम्प्रदायमत[३५०] इदमभिहितम् । योगाभावादिति[३५१] । तथा चेयं नौपाधिकी संज्ञापीति भावः । तदभावादिति । सङ्कोचाभावादित्यर्थः । परमार्थ इति । तथा च पृथिव्यादिपदसंज्ञावदियं नैमित्तिकी संज्ञेति भावः, अन्यथा[३५२] यदि गवयत्वेन रूपेण[३५३] गवयपदस्य न शक्तिस्तदा[३५४] भिन्नफलाभावे उपमानस्य मानत्वं विरुद्ध्येतेति भावः[३५५] । न चेति । तथा च शब्दान्न[३५६] शक्तिग्रह[३५७] इति तात्पर्यम्[३५८] । अन्योन्याश्रयत्वादिति[३५९] । व्यक्तिग्रहे सति[३६०] गवयपदं तदुपस्थापकम्, तदुपस्थितौ च शक्तिग्रह इत्यन्योन्याश्रय इत्यर्थः । इदमरविन्दमपरारविन्दमिव[३६१] इत्यादावव्याप्तिश्च बोध्या[३६२] । अप्रतीतानामिति[३६३] । अप्रतीतगूनामारण्यकानां[३६४] गवयेषु गवयव्यवहाराभावप्रसङ्गात् । गोसादृश्याज्ञानादिति भावः । मूलदोषमाह गौरवाच्चेति ।

पस्थितेः। अत एव नोभयम्, स्वयंप्रतीतसमयसंक्रान्तयेऽतिदेशवाक्यप्रयोगानुपपत्तेः। गवयत्वे ह्ययं व्युत्पन्नो न गोसादृश्ये, निमित्तस्य गवयत्वस्य प्रतीतेः।

ननु यद्यपि तद्वाक्यं समयपरिच्छेदपूर्वं नाजीजनत्, तथापि तदेव वाक्यं स्मृतं सत् प्रवृत्तिनिमित्तं परिच्छेत्स्यति, अध्ययनसमयगृहीत एव वेदराशिरङ्गोपाङ्गपर्यवसितः कालान्तरे।

न च वाक्यार्थस्यैवास्य प्रागेव बोधितत्वात् पर्यवसितमिति वाच्यम्। (गोः ?) [न] सादृश्योपलक्षणत्वनिमित्तत्वयोः सन्देहात्। पश्चाद् गवयत्वेऽवगते तर्कलाघवसहकारात् सादृश्यस्योपलक्षणत्वे निश्चिते 'गङ्गायां घोषः' इत्यत्रैवान्वयबोधो भविष्यतीति चेन्न। उपलक्षणनिमित्तत्वयोः सन्देहेऽपि 'यो गोसदृशः स गवयपदवाच्यः' इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ मानान्तरोपनीतानपेक्षणात्, रक्तारक्तसन्देहेऽपि पटो भवतीति वाक्यवत्। अन्यथा पर्यवसितेऽपि वाक्ये मानान्तरसहकारात्

---

तदनुपस्थितेरिति। शब्दात्[३६५] तदनुपस्थितेरित्यर्थः[३६६]। नोभयमिति। उक्तदोषात् न सादृश्यं गवयत्वञ्चेत्यर्थः। स्वयमिति। स्वयं हि गवयत्वपुरस्कारेण या शक्तिर्गृहीता तन्निर्वाहाय प्रयोगानुपपत्तेरित्यर्थः। गवयत्वे स्वयमुपदेष्टा[३६७] व्युत्पन्न इत्येव[३६८] कथमत आह निमित्तस्येति।

'गोसदृशो गवयः' इति वाक्यादेव लक्षणया गवयत्वपुरस्कारेण[३६९] शक्तिपरिच्छेदो भावीत्यभिप्रायेण[३७०] शङ्कते नन्विति।

उपलक्षणेति[३७१]। तथा च तात्पर्यसंशयेन[३७२] तद्वाक्यं न पूर्वं जनितान्वयबोधमिति भावः। सन्देहादिति[३७३]। यत्र न संशयस्तत्र का गतिरिति[३७४] चेत्[३७५] संशयावश्यकतेत्यभिमानः[३७६]। पश्चात् प्रत्यक्षाद्यन्यतमेन गवयत्वोपस्थित्यनन्तरम्[३७७]। तर्केति[३७८]। लाघवाख्यतर्कपुरस्कारादित्यर्थः। गवयत्वं जातिरूपतया अखण्डम्, सादृश्यमुपाधिस्वरूपतया गुरुस्वरूपमिति भावः। गङ्गायामिति। लक्षणामात्रे दृष्टान्तः। उपलक्षणेति[३७९]। प्रवृत्तिनिमित्तत्वसंशये 'गोसदृशो गवयः' इति वाक्यस्यान्वयबोधजनने योग्यत्वेन पर्यवसितत्वेन निराकाङ्क्षत्वादिति भावः[३८०]। यत्र संशयो[३८१] न जातस्तत्रोपमानस्य मानान्तरता भवतां मतेऽपि दुरपनेयेत्यधिकं[३८२]

तदन्वयबुद्धौ वाक्यभेदापत्तेः। 'गङ्गायां घोषः' इत्यत्र तु पदार्थ एव अन्वयायोग्य इति युक्तं तत्र मानान्तरापेक्षणम्। यदि च प्रतीतसंसर्गबलायातोऽप्यर्थो वाक्यस्यैव तदा वाक्यभेदापत्तिः।

अथ तात्पर्यानुपपत्त्या 'यष्टीः प्रवेशय' इतिवत् तल्लक्षणा अस्तु, गवयपदव्युत्पन्नं प्रति तद्बुद्धेरुत्पत्तये वाक्यमाप्तेनोक्तम्, तच्च न प्रवृत्तिनिमित्तोपादानं विना। न च गोसादृश्यं तथेति तात्पर्यतो गोसादृश्यपदेन गोसमानाधिकरणं गवयत्वमुपलक्षितं कल्प्यते। न तु यथा 'धूमोऽस्ति' इत्यत्र वह्नौ तात्पर्यमुपमानेन निर्वहतीति न लक्षणा। न चात्र प्रमाणान्तरमस्तीति येन तन्निर्वाह्यम्, उपमानस्यासिद्धेः, अन्यथा अन्योन्याश्रयात्। न च वाक्ये न लक्षणा, तस्याः पदधर्मत्वादिति वाच्यम्। एकपद एव लक्षणा, पदान्तरन्तु नियामकमित्यस्य वक्ष्यमाणत्वात्।

अथ गवयत्वेन लक्षणया तदुपस्थितावपि व्यक्तिवाच्यता न ज्ञायेत तच्छब्दात्, इति विशिष्टवाच्यताग्राहकमानान्तरमवश्यं स्वीकर-

---

दूषणं परं प्रति बोध्यम्[३८३]। वाक्यभेदापत्तेरिति[३८४]। शब्दादनुपस्थितस्य न शाब्दबोधप्रकारतेत्यपि बोध्यम्।

प्रकृतेऽन्वयानुपपत्तिर्लक्षणाबीजं[३८५] नास्ति, उक्तदृष्टान्तस्थलेऽस्तीति वैषम्यमप्याह[३८६] गङ्गायामिति। ननु प्रतीत्यपर्यवसानाभावेऽपि वाक्यार्थप्रतीतस्य[३८७] गोसदृशगवयपदवाच्यत्वस्य[३८८] सप्रवृत्तिनिमित्तस्य[३८९] गौरवादिना सादृश्यप्रवृत्तिनिमित्तत्वाभावे[३९०] गवयत्वप्रवृत्तिनिमित्तत्वं[३९१] विना पर्यवसानं नास्तीति तत्कल्पनापि[३९२] वाक्यार्थ इत्यत आह यदीति[३९३]। वस्तुतस्तु प्रतीतार्थानुपपत्तिरनुमानं न वाक्ये अन्तर्भवतीति भाव्यम्[३९४]।

मा[३९५] भवत्वन्वयानुपपत्तिस्तात्पर्यानुपपत्त्यैव लक्षणास्त्विति[३९६] शङ्कते अथेति। तच्चेति। व्युत्पादनपरत्वमित्यर्थः[३९७]। न चेति। सादृश्यं गौरवेण न प्रवृत्तिनिमित्तमिति भावः। शक्यसम्बन्धरूपां लक्षणामाह गोसादृश्येति। 'धूमोऽस्तीति' वाक्यवदन्यलभ्ये[३९८] न लक्षणास्तीत्यत आह न तु यथेति[३९९]। उपमानस्येति। तत्कल्पने च[४००] गौरवमिति भाव्यम्[४०१]। एकपद इति। सदृशपद इत्यर्थः, तथा च गोपदं स्वार्थान्वये न सादृश्यं नियमयति 'गम्भीरायां नद्यां घोषः प्रतिवसति' इत्यत्र[४०२] गम्भीरपदं यथा नदीविशेषनियामकमिति भावः। वक्ष्यमाणत्वात्। लक्षणग्रन्थे तथा वक्ष्यमाणत्वात्। अथेति। साक्षाच्च[४०३] तात्पर्यं नात्रावधारितमिति न लक्षणेत्यर्थः।

णीयम् । न च यन्निष्ठो धर्मो यत्पदवाच्यः सोऽपि तद्वाच्य इति नियमः, जातिपदे व्यभिचारादिति चेन्न । प्रवृत्तिनिमित्तवद् वाच्यत्वबोधतात्पर्यकत्वेन ज्ञातातिदेशवाक्ये गवयत्वविशिष्टव्यक्तेरेव लक्षणातः ।

अथ यदि गवयत्वे साक्षात् तात्पर्यं गोसदृशपदस्य गृहीतं तदा लक्षणा, न च साक्षात् तात्पर्यमवधृतम् । अन्यथा 'धूमोऽस्ति' इत्यत्रापि साम्यादिति चेन्न । उपस्थापकान्तराभावे साक्षात् तात्पर्यस्यैव तात्पर्यरूपत्वात् । न चोपमानमेव तथा, अन्योन्याश्रयात् ।

मैवम् । यत्र प्रवृत्तिनिमित्तविषयबोधने न तात्पर्यं 'यो गोसदृशः स गवयशब्दवाच्यः' इति स्वरूपाख्यानमात्रं तत्रापि उक्तसामग्रीतः समयपरिच्छित्तिर्भवत्येव । न च तत्र व्युत्पित्सुव्युत्पत्तये प्रवृत्तिनिमित्तविशेषे तात्पर्यं यदनुपपत्तिर्लक्षणाबीजं स्यात् ।

अपि च 'धिक् करभमतिदीर्घग्रीवम्' इत्यादिवाक्यस्य करभनिन्दातात्पर्यकस्य प्रवृत्तिनिमित्तपरत्वाभावेऽपि तादृशपिण्डमनुभवतः स्मरतश्च वाक्यार्थम् 'अयं करभशब्दवाच्यः' इति भवति मतिः । न च तत्र प्रवृत्तिनिमित्तविशेषे तात्पर्यमस्ति लक्षणाया बीजम्, निन्दापरत्वात् ।

किञ्च, सर्वत्रान्वयानुपपत्तिरेव लक्षणाबीजम् । 'यष्टीः प्रवेशय' इत्यादावपि प्रकरणादिना पुरस्कारादिप्रयोजनकत्वं प्रवेशनस्यावगतम् । तादृशे च प्रवेशनादौ यष्ट्यादेरनन्वयात् तात्पर्यानुपपत्तेरपि तात्पर्यमज्ञात्वा ज्ञातुमशक्यत्वेन तदर्थं प्रकरणादेरवश्योपजीव्यत्वात् ।

---

वैशेषिकमतं दूषयति मैवमिति । यत्र नोक्ततात्पर्यकमतिदेशवाक्यं[४०४] केवलं सादृश्यमात्रतात्पर्यकं[४०५] तत्रापि लक्षणां विना तदर्थप्रतिसन्धानेन उक्तफलदर्शनादुपमानं प्रमाणं पृथगित्यर्थः । न च तत्र तात्पर्यभ्रमाल्लक्षणा स्यात्, तत्रापि तात्पर्याभावनिश्चयेऽपि फलदर्शनात् । स्वसिद्धान्तमाह किञ्चेति । प्रकृते नान्वयानुपपत्तिरिति भाव्यम् । न चेत्थमत्रापि प्रकरणादिना वाच्यता प्रवृत्तिनिमित्तविशिष्टविषयावगता[४०६] तथा स्वसादृश्यविशिष्टानन्वय[४०७] इति लक्षणेति, प्रकृते तादृशप्रकरणादेरभावात्; तादृशानुपपत्तिप्रतिसन्धानमन्तरेण[४०८] यत्र सादृश्यपुरस्कारेण शाब्दबोधानन्तरं सादृश्यदर्शनाद् वाच्यतापरिच्छेदम्[४०९], तत्रोपमानस्य मानत्वं तद्व्याप्यत्वाविरोधादिति[४१०] । ननु[४११] तात्पर्यव्याप्यत्वेनानुगमाभावे शाब्दबोधे प्रकरणादेरननुगमेन[४१२]

अथ प्रकरणादेरननुगमः । तात्पर्यव्याप्यत्वेन तदनुगमे तात्पर्यानुपपत्तिरेव तद्बीजमस्तु लाघवादिति चेन्न । धूमादिवदननुगतस्यापि व्याप्यत्वाविरोधात् । तस्माद् गवयशब्दः, कस्यचिद् वाचकः, शिष्टैः प्रयुक्तत्वात्, इति सामान्यतो निश्चितेऽपि 'गवयत्वविशिष्टो धर्मी गवयपदवाच्यः' इति लाघवान्निर्णयम् ।

तच्च प्रमाणसहकारि । न च तस्यां दशायां प्रमाणान्तरमस्ति । अतो यत्प्रमाणसहकारि तत्प्रमाणान्तरमास्थेयम् । अथास्त्वनुमानम्, तथा हि, गवयशब्दः, गवयत्वविशिष्टधर्मिवाचकः, असति वृत्त्यन्तरे वृद्धैः प्रयुज्यमानत्वात्, गवि गोशब्दवदिति चेन्न । गवयत्वविशिष्टो यो धर्मी तस्य वाचकत्वग्रहेऽपि गवयत्वस्य प्रवृत्तिनिमित्तत्वासिद्धेः । न च शक्तिमज्ञात्वा वृत्त्यन्तरं क्वापि अवधारयितुं शक्यते, सामानाधिकरण्यमात्रस्य निमित्तोपलक्षणतासाधारणत्वात् ।

अथ गोसादृश्यस्य प्रवृत्तिनिमित्ततायां गौरवावतारे नोपमानस्यावतारः । तथा च तर्केण इतराप्रवृत्तिनिमित्तत्वे निश्चिते गवयपदम्' गवयत्वप्रवृत्तिनिमित्तकम्, इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्त-

---

कारणत्वं न स्यादिति चेत्[४१३], तत्राकाङ्क्षादिनिश्चयस्यैव कारणत्वाभिप्रायेणाभिहितत्वात्[४१४] । ननु तात्पर्यनिश्चयस्याहेतुत्वे उभयत्र योग्यतासत्त्वे तात्पर्यं यत्र जानाति तत्रैव शाब्दबोधो नान्यत्रेति कथं स्यादिति चेत्, तत्रोभयत्र शाब्दबोधेऽप्यदोषात्[४१६] प्रवृत्तिस्तदभिप्रायज्ञानपरम्परयापेक्षते[४१७] । अत एव[४१८] शुकबालादिवाक्ये[४१९] तात्पर्याभावनिश्चयेऽपि[४२०] ततः शाब्दधीरिति[४२१] ।

तच्चेति । वाच्यत्वज्ञानमित्यर्थः । सामान्यव्याप्त्यभिप्रायेणाह गवीति । सामान्यव्याप्त्यावप्यनुमानपरिच्छेद्यगवयत्वविशिष्टधर्मिवाचकत्वज्ञानं[४२२] विशेषणज्ञानत्वेनावश्यं कारणं वाच्यम्, तच्च[४२३] प्रथमतोऽसिद्धमिति दूषणे सत्यपि दोषान्तरमाह न[४२४] गवयत्वेति । शक्तिमिति[४२५] । मुख्यार्थे निश्चित एव न[४२६] लक्षणादिमानप्रयोग इति शक्यं निश्चेतुम् । अत[४२७] एव त्वनिश्चित[४२८] इत्यर्थः । ननु सामानाधिकरण्यमत्र साधकमत आह सामानाधिकरण्येति । 'वासस्वी[४२९] देवदत्तशब्दवाच्यः' इत्यत्र वासस उपलक्षणत्वादिति भावः ।

गवयत्वप्रवृत्तीति । ननु साध्याप्रसिद्धिरिति चेन्न, सामान्यतो गवयत्वं प्रवृत्ति-

कत्वात्, यन्नैवं तन्नैवमिति चेन्न । तर्कस्यानिश्चायकत्वात् । न चायं तर्को व्याप्तिग्रहमूलको येन विपर्ययानुमानादर्थसिद्धिः ।

अथ गवयपदं सप्रवृत्तिनिमित्तकमिति सामान्यतोदृष्टमेव तर्कसहकृतं गवयपदस्येतराप्रवृत्तिनिमित्तकत्वं परिच्छिनत्ति, न तु मानान्तरं कल्पयित्वा तर्कः सहकारी कल्प्यत इति चेन्न । इदं सप्रवृत्तिनिमित्तकम्, अन्यच्च न प्रवृत्तिनिमित्तमिति बुद्धावपि गवयत्वप्रवृत्तिनिमित्तकं गवयपदमिति मानान्तरं विना अप्रतीतेः । अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वनियमात् ।

अथ यथा इच्छायां सामान्यतोदृष्टेन विशेषबाधकसहकृतेन अष्टद्रव्यानाश्रयत्वं प्रतीयते, अन्यथा विशेषबाधकानां द्रव्यव्यतिरेकविषयकत्वेन अष्टद्रव्यानाश्रयत्वं केन ग्राह्यम् ? तथात्रापि गौरवाख्यतर्कसहकृतसामान्यतोदृष्टाद् इतराप्रवृत्तिनिमित्तकत्वे ज्ञाते पश्चात् स व्यतिरेकी स्यात्, कल्प्यप्रमाणान्तरापेक्षया क्लृप्तप्रमाणसहकारित्वस्य युक्तत्वादिति चेन्न । इच्छायाम् एकैकबाधसहकृतापरबाधकैरेव तावद् द्रव्यविशिष्टवैशिष्टयाद् अष्टद्रव्यानाश्रयत्वपरिच्छेदात्, न तु सामान्यतोदृष्टेन विशेषणद्वयस्य परिच्छित्त्यैव

---

निमित्तं जातित्वाद् इत्यादिना तत्सिद्धेरिति[४३०] भावः[४३१] । तर्कस्येति । तर्कस्य प्रमाणसहकारित्वादिति[४३२] भावः, न[४३३] च[४३४] तर्कस्य प्रसङ्गार्थकत्वे[४३५] विपर्यये पर्यवसानमवश्यं वाच्यम् । तदेवानुमानमत आह न चायमिति । लाघवाख्यतर्कस्य[४३६] व्यतिरेकेऽनुमानत्वाभावादित्यर्थः[४३७] । अप्रतीतेरिति । गवयत्वेन प्रवृत्तिनिमित्तेन 'नायं[४३८] गवयशब्दवाच्यः' इति प्रतीतेरुपमितित्वेनावश्यं भवदुक्तमानातिरिक्तमानं[४३९] वाच्यमित्यप्यत्राधिकं दूषणं बोध्यम् । अनुमितेरिति । तथा च गवयत्वेन तथाप्रतीत्यर्थमुपमानं[४४०] कल्प्यम् केवलव्यतिरेकिवदिति[४४१] भावः ।

नन्वष्टद्रव्यानाश्रयत्वं[४४२] विशेषबाधकानामेव[४४३] विषयो न[४४४] तु[४४५] सामान्यतोदृष्टस्येत्यत आह अन्यथेति[४४६] । नन्वेतादृशकल्पने गौरवमित्यत आह कल्प्येति । सामान्यतोदृष्टस्य न तावद् विशिष्टवैशिष्ट्यं विषयः, किन्तु बाधकानुमानादेव तत्सिद्धिरित्याह नेति । विशेषणद्वयेति[४४७] । सप्तद्रव्यानाश्रितत्वरूपविशिष्टाष्टद्रव्यानाश्रितत्वरूपवैशिष्ट्यद्वयोपस्थित्यैव[४४८] विशिष्टवैशिष्ट्यबोधनिर्वाहादित्यर्थः । तथा च गौरवाख्यतर्कसहकारेण नेतराप्रवृत्तिनिमित्तकत्वनिश्चयस्तत्र[४४९] तस्या-

विशिष्टवैशिष्ट्यबोधनिर्वाहात्, तर्कानवतारदशायां तस्य परिच्छेदकत्वाच्च ।

न च व्याप्तिपरमिदं वाक्यं 'यो गोसदृशः स गवयपदार्थः' इति वाक्यादवगतव्याप्तेरनुमित्युदयाद् 'अयं गवयपदवाच्यः, गोसदृशत्वात्, अतिदेशकालावगतपिण्डवत्' इति वाच्यम् । न हि गोसदृशं ज्ञात्वा अनेन पृष्टः 'स किंशब्दवाच्यः' इति । किन्तु सामान्यतो गवयपदार्थमवगत्य 'स कीदृक्' इति । तथा च यद्योगप्राथम्याभ्यां तस्यैव व्याप्यत्वं ततः किं तेन ?

अथ लक्षणपरमिदं वाक्यम् 'किंलक्षणकोऽसौ' इति प्रश्नार्थः । एवञ्च प्रयोक्तव्यम् 'अयमसौ गवय इति व्यवहर्त्तव्यः, गोसदृशत्वात्, यस्तु न तथा नासौ गोसदृशः, यथा हस्ती' इति चेन्न । न हि हस्त्यादीनां विलक्षणत्वे प्रमाणमस्ति, सर्वप्रयोगस्य दुर्ज्ञेयत्वात्, कतिपयव्यवहारस्यानैकान्तिकत्वात् । न च 'कीदृक्' 'किंलिङ्गकः' इति प्रश्नार्थः । न हि अनेन लिङ्गमज्ञात्वा

---

सामर्थ्यात् । किन्त्वितरस्य न[४५०] प्रवृत्तिनिमित्तत्वनिश्चय इति भावः । तर्केति । यदा च गौरवादितर्को नावतीर्णः, किन्तु सामान्यतोदृष्टमात्रमवतोर्णं तदोक्तहेतोरितराप्रवृत्तिनिमित्तकत्वरूपविशेषणासिद्धिः[४५१], तथा च गोसादृश्यज्ञानेऽतिदेशवाक्यार्थस्मरणे[४५२] च सति[४५३] लाघवाख्यतर्कसहकारेण[४५४] गवयत्वप्रवृत्तिनिमित्तत्वनिश्चय इति शङ्कार्थः[४५५] ।

यद्यपि पिण्डस्य गवयशब्दवाच्यत्वानुमितावपि गवयत्वेन प्रवृत्तिनिमित्तेन 'गवयशब्दवाच्योऽयम्' इति रूपं ज्ञानं नोक्तानुमानात् सिध्यति, तथापि तद्दूषणे सत्यपि दोषान्तरमाह न हीति । यदि 'गोसदृशः किंशब्दवाच्यः' इति पृच्छयेत तदा तमुद्दिश्य 'गवयशब्दवाच्यः' इति विदध्यात् । किन्तु 'गवयशब्दवाच्यः कीदृक्' इति पृष्टम् । तथा च 'यो गवयशब्दवाच्यः स गोसदृशः' इत्युत्तरे यत्पदेन तस्य प्रथममुद्दिष्टत्वाद् गवयशब्दवाच्यत्वस्यैव व्याप्यत्वमेवं विपरीतमत्या तत् शब्दसाधनत्वस्याशक्यत्वादित्यर्थः । वस्तुतः शब्दानुपस्थितस्य व्याप्यत्वस्य कथं शाब्दबोधे विषयतेत्यपि ध्येयम् ।

ननु गन्धवती पृथिवीतिवद् यद्योगप्राथम्यव्यतिरेकेऽपि लक्षणबोधकमिदं वाक्यमिति शङ्कते अथेति । न हीति । तथा च व्यतिरेकव्याप्त्यसिद्धिरित्यर्थः । नन्वेवं व्यवहारे साध्ये सर्वत्र लक्षणोच्छेदस्तथा च यथा पृथिवीत्वेन पृथिवीपदवाच्यत्वं साध्यते तथा गवयपदवाच्यत्वं साध्यतामिति चेन्न । अतिदेशवाक्यात्[४५६] पूर्वं[४५७] गवयत्वस्याप्रतीतत्वेनातिदेशवाक्याच्च न तत्प्रतीतिः, अगृहीतशक्तिकत्वात्, सादृश्यस्यानिमित्तत्वादिति । लिङ्गमिति । लिङ्गैकगम्यं गवयपदवाच्यत्वं[४५८] तच्च गवयत्वेन निमित्तेनेद-

गवयपदस्य वाचकत्वं कस्यचिच्च तद्वाच्यत्वमवगतं येन तदर्थं प्रश्नः। प्रवृत्तिनिमित्तविशेषे प्रश्नः। गवयपदं येन निमित्तेन प्रवर्त्तते तस्य किं लिङ्गमित्यर्थ इति चेत्? न हि तदनुमेयमेव इत्यनेन निश्चितं येन तथा स्यात्। ज्ञानहेतुमात्रप्रश्ने तद्विशेषेणोत्तरमिति चेन्न। अविशेषाद् इन्द्रियसन्निकर्षमप्युत्तरयेत् 'वनं गतो द्रक्ष्यसि' इति। तस्मान्निमित्तभेदे एवायं प्रश्नः 'कीदृग् गवयः, केन निमित्तेन गवयपदं प्रवर्तते'। गवयत्वस्य साक्षादुपदर्शयितुमशक्यत्वात्, पृष्टः स तदुपलक्षकं सादृश्यमाचष्टे। पश्चाच्च दृष्टेऽपि पिण्डेऽतिदेशवाक्यार्थं स्मरतस्तर्कसहकारात् 'गवयत्वविशिष्टो धर्मी गवयशब्दवाच्यः' इति प्रवृत्तिनिमित्तविशेषपरिच्छित्तिरुपमानफलम्।

अथ गौरवेण अन्यानिमित्तकत्वे सति सनिमित्तकत्वादिति व्यतिरेकिण एव गवयत्वप्रवृत्तिनिमित्तकत्वधीरिति चेन्न। व्याप्यमूलकतया गौरवस्य तद्विपर्ययस्य वा अप्रमाणत्वात्। त (त्रा ?) [स्या]-प्रमा(णे ?) [णत्वे] सहकारितामात्रेण अन्यनिमित्तत्वशङ्कायां कथमुपमानमिति चेन्न। गौरवसहकृतोपमानादेवान्यानिमित्तकत्वे सति सनिमित्तकत्वपरिच्छेदात्।

अस्तु गौरवसहकृतात् सनिमित्तकत्वमानादेव गवयत्वनिमित्तकत्वसिद्धिर्न चैवं व्यतिरेक्युच्छेदः, कार्यत्वे पर्यवसिते बाधकानन्तरं व्यति-

---

मपि ज्ञातमेव, किमर्थं प्रश्न इत्यर्थः। गवयत्वेन प्रवृत्तिनिमित्तेन गवयशब्दवाच्यत्वं तथापि न ज्ञातं तदर्थमुपमानमित्यपि दूषणं ध्येयम्। प्रवृत्तिनिमित्तविशेषलिङ्गं[४५९] न ज्ञातम्, तदर्थं प्रश्न इति शङ्कते प्रवृत्तीति। व्युत्पत्तिपरमतिदेशवाक्यं प्रवृत्तिनिमित्तपरमित्याह तस्मादिति। ननु यदि निमित्तप्रश्नः[४६०] किं तदेव नोत्तरयतीत्यत आह गवयत्वस्येति। उपलक्षकमिति[४६१]। तदन्यत्वादिति भावः।

शङ्कते[४६२] अथेति। ननु[४६३] प्रागुक्तेन पुनरुक्तिरिति चेत्, गौरवमात्रेणान्यनिमित्तकत्वमवधार्यमित्यस्य शङ्कार्थत्वादधिकनिर्वचनाय पुनरत्राशङ्कितमित्यप्येके। शङ्कते अन्येति[४६४]। तथा चान्यानिमित्तकत्वनिश्चयस्यावश्यवक्तव्ये[४६५] व्यतिरेकित[४६६] एव साध्यसिद्धिरस्त्विति शङ्कार्थः।

अन्यानिमित्तकत्वे सतीति। यद्यपि गौरवसहकारेणान्यानिमित्तकत्वमुपमानेन न[४६७] परिच्छिद्यते तथापि अन्यनिमित्तपरित्यागे[४६८] तात्पर्यमत्र बोध्यम्। शङ्कते[४६९] अस्तु गौरवेति। ननु पुनरुक्तमिदमिति चेन्न। नान्यत्[४७०] प्रवृत्तिनिमित्तमिति[४७१]

रेक्युदयात् । यत्र च प्रथमं व्यतिरेकाभावस्तत्र कार्यत्वादेव फलं [नेति ?] अन्यानिमित्तकत्वं सनिमित्तकत्वञ्चेति बुद्धावपि गवयत्वनिमित्तकं गवयपदमिति बुद्धेरसिद्धेरुक्तत्वात् ।

किञ्चात्र व्यवहारेण प्रवृत्तिविषये पदशक्तिग्रहो न तु तन्निमित्ते, तेनाप्रतिबन्धात् । न वा गौरवातिव्याप्त्यादिना इतरनिरासे गोत्वादेर्निमित्तत्वग्रहः, गौरवादेरतर्कत्वात्, अप्रमाणत्वाच्च ।

तस्माद् व्यक्तौ शक्तिग्रह एव लाघवादिसाहित्येन इतरानिमित्तकत्वे सति गोत्वादिनिमित्तकत्वमवधारयति ।

सर्वत्र तदेवोपमानफलमिति कश्चित्, तन्न । शक्तिग्राहकमेव

---

बाधसहकारेण[४७२] शङ्का पूर्वं कृता प्रकृते सामान्यतो[४७३] दृष्टा लाघवेन[४७४] तथा धीरस्त्वति[४७५] शङ्काभेदः । इत्युक्तत्वादिति[४७६] । अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमस्योक्तत्वात्, उक्तप्रकारेण लाभात्[४७७] । यथोपनीतमनुमितौ न भासते तथानुमानोपाये प्रागुपपादितमनुसरणीयम् । यत्र सामान्यतोदृष्टावतारसमये न लाघवावतारस्तत्रागतिश्चेत्यपि बोध्यम् । ननु गवयत्वावच्छेदेनायं[४७८] पिण्डो[४७९] गवयशब्दवाच्यः, गोसदृशत्वात्, यन्नैवं तन्नैवमिति व्याप्तिमुपजीव्य पक्षधर्मताज्ञानादुक्तानुमितिरस्तु किमतिरिक्तमानेनेति चेन्न । तथापि गवयत्वस्य[४८०] शक्त्यवच्छेदकत्वालाभादेतदप्रतिसन्धानेऽपि[४८१] 'गोसदृशो गवयः' इति ज्ञानानन्तरमतिदेशवाक्यार्थस्मरणे सति गवयत्वेन प्रवृत्तिनिमित्तेन 'अयं गवयशब्दवाच्यः' इत्युपमितिदर्शनात् । अत एव यद् यद्[४८२] बाधकमत्र तत् सर्वं निराकृतमवधेयम् ।

सर्वत्र व्यवहारे[४८३] प्रवृत्तिनिमित्तपरिच्छेद उपमानादेव । अत एव वदन्ति[४८४] व्युत्पत्तिरुपमितिरितीति[४८५] । प्रभाकरमतमुपस्थापयति अत्रेति । प्रवृत्तिविषये व्यक्तौ आनयनादिव्यवहारेण प्रवर्त्तकव्यक्तौ शक्तिग्रह इति भाव्यम् । न[४८६] वेति[४८७] । मध्यस्थितानामव्याप्तेर्बहिःस्थितानामतिव्याप्तेः[४८८] क्वचिद् गौरवादेश्च[४८९] परिशेषादवशिष्टगोत्वादिनिमित्ततेति[४९०] शङ्कार्थः । अतर्कत्वात् । अप्रसङ्गात्मकत्वात् । तथा च भाक्तस्तत्र[४९१] तर्कव्यवहारः[४९२] । अप्रमाणत्वात् । अनुमानादिरूपत्वाभावात् । ननु[४९३] सादृश्यादेरभावादत्रोपमानं किं कथञ्चेत्युपसंहारव्याजेन[४९४] निराकरोति तस्मादिति । व्यक्तेर्वाच्यत्वज्ञानमेव[४९५] सर्वत्र करणम्, लाघवादितर्कसहकाराच्च[४९६] नातिप्रसङ्ग इति भावः ।

शक्तिग्राहकमिति । लाघवाद् व्यभिचारादिप्रतिसन्धाने सति शक्तिग्राहकमानमेव

लाघवादिसहकृतं निमित्तमप्यवधारयति, यथा क्षित्यादौ कर्तुरेकताम् । अथैवं भिन्नकर्तृकेषु लाघवात् कार्यमेककर्तृतां बोधयेत् ? बोधयत्येव, पश्चाद् बाधकेन त्यज्यते इति चेन्न । बाधितविषयत्वेनाभासत्वात्, अलघुनि लघुत्वज्ञानस्यायथार्थत्वेन तज्जन्यानुमितेराभासत्वाच्च । न चोपमितिरेवेतरव्युत्पत्तिः, अन्यथा तदनिरुक्तेरिति वाच्यम् । व्युत्पत्तेः शब्दसहकारित्वेन मानान्तरत्वेन व्याघातात् । व्युत्पत्तिस्तु यां बुद्धिमासाद्य पदार्थविशेषबोधः सा ।

अन्ये तु यत्तदादिपदानामनुगतैकरूपाभावेन एकत्रैव शक्तिग्रहादन्यत्रापीति पदान्तरव्यवहारः, पदान्तरवैधर्म्यात् न प्रमाणान्तरमुपमान-

---

गोत्वादिना प्रवृत्तिनिमित्तेन व्यक्तौ शक्तिं[४९७] गृह्णाति, न च जातावसम्बन्धस्तस्या अपि व्यवहारविषयत्वावच्छेदकत्वमित्यर्थः[४९८] । दृष्टान्तमाह यथेति । ननु यदा[४९९] प्रथमं प्रवृत्तिनिमित्तं तटस्थीकृत्य[५००] व्यक्तावेव[५०१] शक्तिग्रहः पश्चात्तेन शक्तिग्रहेण गोत्वादेः प्रवृत्तिनिमित्ततावधार्यते, तत्रोपमानात्[५०१] शक्तिग्रह इति चेत्, न[५०२], शक्तिग्रहस्य निर्व्यापारत्वेनाकरणत्वात् । मनसा[५०३] तत्र तथाविधशक्तिधीरिति दिक् । ननु व्यवहारेण व्यवहर्त्तव्यज्ञानमात्रमनुमितम्[५०४], कथं ततः शक्तिग्रहः शक्तेः पूर्वमज्ञानात् तया[५०५] समं व्याप्तेरग्रहादिति[५०६] चेन्न । यद्धि करणं तत्तत्सम्बद्धं सत् कार्यं जनयतीति[५०७] ज्ञानजनकतामुपजीव्य सम्बद्धत्वेन शक्तिसिद्धिः । यद्वा[५०८] ज्ञानजनकतामुपजीव्यानुमानेन जनकतावच्छेदकत्वेन शक्तिसिद्धिः । (नवयोत्तर दत्वा ?)-दिकं[५०९] तथा तेषामनुगतत्वादिति[५१०] दिक् । बाधितेति । व्यभिचाराद्यभावे एवंविधबाधोऽप्यसङ्कीर्ण इति भावः । नन्वेवं गौरवज्ञानेन यत्र गुरूणां त्यागस्तत्र गौरवस्य हेत्वाभासत्वं स्यात्, तद्[५११] ज्ञानस्यानुमितिप्रतिबन्धकत्वादिति चेन्न, हेत्वाभासलक्षणेऽनुक्तत्वात्[५१२] । आभासत्वादिति । हेतोराभासत्वादित्यर्थः । व्युत्पत्तेर्नानिरुक्तिरित्याह यामिति । यथा सामान्यशब्दानां विशेषोपस्थापने सन्निधिः, यथा वा सिद्धसाध्यसमभिव्याहारस्त्वसिद्धसाध्यायोपयुज्यत[५१३] इत्यादि । अन्ये तु शक्तिग्रहोऽपि[५१४] व्युत्पत्तिरित्याहुः ।

अन्ये त्विति । अननुगते सर्वत्र चानेकशक्तिग्रहे[५१५] गौरवादानन्त्यादशक्यत्वाच्च । किन्तु एकव्यक्तावेव तद्ग्रहः, उपमानं व्यक्त्यन्तरेऽन्वयबोधः[५१६] शब्दप्रयोगो वा फलमित्यर्थः पदान्तरेति । गृहीतशक्तिक एवार्थे पदस्यान्यत्र[५१७] सामर्थ्यं

**मिति । तन्न । बुद्धिस्थत्वादिनोपलक्षणेन साधारणेन शक्तिग्रहात् । बुद्धिविशेषादेव विशेषपर्यवसानम्, तथैव व्यवहारात् । अन्यथा मानान्तरेऽपि दोषः । न हि अनुगतरूपप्रतीतावेव तत्र शक्तिग्रहः ।**

**यत्तु मात्रादिपदानां जनकस्त्रीत्वादिना शक्तिग्रहे कथं चैत्रमात्रादिलाभः ? न च समभिव्याहारविशेषादिति वाच्यम् । पदार्थो हि पदार्थान्तरमन्वेति, जनकस्त्रीत्वञ्च न तथेति कथं चैत्रादिना जनकत्वान्वय**

---

क्लृप्तमत्र तु न तथेति पदान्तरवैधर्म्यात्[५१८], उपमानं मानान्तरमित्यर्थः । बुद्धिस्थत्वादिनेति । आदिपदग्राह्यं सम्बोध्यत्वमुक्तम्, उच्चारयितृत्वादिकमात्मत्वादिकं[५१९] [ वा ] [५२०] । सम्बोध्यत्वादिकं स्वरूपसत्सहकारि शक्तिग्राहकमित्यपि[५२१] वदन्ति । नन्वेवं बुद्धिस्थत्वादिप्रकारिका प्रतीतिस्तेभ्यः[५२२] स्यादित्यत आह उपलक्षणेनेति । एवञ्चेदमनुगतं[५२३] रूपं[५२४] प्रवृत्तिनिमित्तम्, तेन[५२५] नाननुगमो[५२६] न वा पदान्तरवैधर्म्यमिति । तर्हि कथं तेभ्यो[५२७] घटत्वादिरूपेण विशेषप्रकारेण शाब्दज्ञानमित्यत आह बुद्धीति । ननु बुद्धिस्थत्वं वा प्रवृत्तिनिमित्तम्, घटत्वादिप्रकारकबुद्धिस्थत्वं वा ? आद्ये घटत्वादिप्रकारिका धीर्न स्यात्, शब्दादनुपस्थितेः । अन्त्येऽननुगमस्तदवस्थ[५२७] इति चेत्[५२८] । अत्र वदन्ति पदान्तरजन्यशाब्दबोधादेतज्जन्यशाब्दबोधे[५२९] पदावृत्त्यानुपस्थितमपि[५३०] प्रकारीभूय भासत इति कल्प्यते, अनन्यगतिकत्वात् । तथा च बुद्धिस्थत्वेन रूपेण शक्तावपि यत्तदादिपदेषु[५३१] येन रूपेण बुद्धिस्थता तत्प्रकारकधीरेव जन्यते[५३२], न तु[५३३] बुद्धिस्थत्वेन, फलबलेन तथा कल्पनात् । आत्मादिपदे[५३४] तु[५३५] स्वतन्त्रोच्चारयितृत्वादिकं तथात्मत्वादिनोपस्थितिसहकारात्[५३६] । यद्वा तत्रात्मत्वेन रूपेण[५३७] युष्मदस्मदोरर्थे शक्तिः, स्वतन्त्रोच्चारयितृत्वादिकं स्वरूपसत्सहकारीति[५३८] वदन्ति । केचित्तु यत्तदादिपदेषु शक्तावर्थविशेषलाभो[५३९] लक्षणयेति वदन्ति । अन्ये तु बुद्धिस्थत्वेनोपस्थिते तेन तेन बुद्धिविषयतावच्छेदकतत्तद्रूपेण[५४०] शक्तिग्रह इति वदन्ति । अन्यथेति । यदि बुद्धिस्थत्वाद्यनुगतं[५४१] रूपं शक्तिग्रहे[५४२] न प्रयोजकं तत्तद्विशेषो[५४३] वा विशेषबोधे न सहकारी तदा मानान्तरपक्षेऽपि न शक्तिग्रहो न वा विशेषपर्यवसाननियमोऽतिप्रसङ्गादित्यर्थः[५४४] । वस्तुतस्तु तत्पदसाधर्म्येणैव[५४५] व्युत्पत्तिसम्भवे तद्वैधर्म्यस्य तदर्थं मानान्तराङ्गीकारस्य च व्यर्थत्वमिति बोध्यम् ।

यत्त्विति । 'चैत्रो मातृभक्तः' इत्यादौ चैत्रमातृप्रतीतिरस्ति[५४६], सा च न शक्तेति[५४७] मातृशब्दे[५४८] चैत्रान्तर्भावेन शक्त्यभावात् । अतस्तदर्थमुपमानमित्यर्थः ।

इति मानान्तरमिति । तन्न । जनकत्वस्य जन्यसापेक्षत्वेन योग्यत्वादिना मैत्रेणान्वयात् ।

लक्षणन्तु उपमितिकरणत्वम् । उपमितित्वञ्च जातिः । न चासिद्धिः, कारणविशेषे कार्यवैजात्यमावश्यकमिति कारणव्यङ्ग्यत्वात् । यद्वा नियतधर्मसमानाधिकरणशब्दप्रवृत्तिनिमित्तज्ञानमुपमितिः । प्रकारतया शब्दशक्तिविषयत्वं निमित्तत्वम् । अगृहीतसमयकसंज्ञया वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तप्रकारतापरिच्छेदो वा, किञ्चिद्वाक्यार्थसामाना-

---

तन्नेति । तथा च पदार्थैकदेशेन सममनन्वये आकाङ्क्षाविरहः प्रयोजकः, प्रकृते जनकत्वस्य नित्यसापेक्षत्वेन आकाङ्क्षासत्त्वात्[४४९] दोषाभावात्, अत एव 'पार्थ एव धनुर्धरः' इत्यादावन्वयबोधः । न च कृतियोग्यता[४५०] शक्या कृतेः[४५१] पदार्थैकदेशत्वेन[४५२] निराकाङ्क्षत्वादिति शब्दखण्डविरोधः, तस्य मतविशेषेणाभिधानादिति[४५३] ।

ननु वैधर्म्याव्याप्तिरित्यत आह लक्षणन्त्विति । कारणेति । अविदितसमयसंज्ञासमभिव्याहृतवाक्यार्थस्य अनुसन्धानरूपेतरप्रमाणविलक्षणसामग्रीभेदेन तत्फलवैजात्यस्यावश्यकत्वादित्येव निर्वाहको हि हेतुरित्याह कारणेति[४५४] । व्यङ्ग्यत्वादिति । यद्यपि सास्नावदिद[४५५] न व्यञ्जकम्, एतदज्ञानेऽपि[४५६] उपमितित्वानुव्यवसायात्[४५७] तथापि वृत्तावच्छेदकत्वेन तद्व्याप्यतोक्ता । यद्वेति । संज्ञावाच्यतया[४५८] नियतधर्मसमानाधिकरणशब्दात्[४५९] बुद्ध्यसाधारणैककारणकः[४६०] प्रवृत्तिनिमित्तपरिच्छेद उपमितिरित्यर्थः[४६१] । इदन्तूपमितित्वपरिचायकम्, उपमितित्वजातेरभावे[४६२] इदमेव लक्षणमुपमितिव्यवहारनिमित्तम्, उपमिनोमीत्यनुव्यवसायाभावप्रसङ्गात्[४६३] । उक्तलक्षणस्यातीन्द्रियत्वेनानुव्यवसायाविषयत्वादिति[४६४] । प्रकारतयेति[४६५] । ननु घटादावतिव्याप्तिरिति[४६६] चेन्न[४६७], शक्यवृत्तित्वे सतीत्यनेन विशेषणात् । यद्वा शक्यतावच्छेदकत्वरूपं[४६८] शब्दशक्तिग्रहविषयत्वं प्रवृत्तिनिमित्तत्वमित्यर्थाददोषात् । आचार्यतात्पर्यविषयीकृतलक्षणमाह[४६९] यद्वेति । सामानाधिकरण्येनेत्यस्य[४७०] अतिदेशवाक्यार्थीभूतगोसादृश्यादिसामानाधिकरण्येनाज्ञातसमयगवयपदादेः[४७१] प्रवृत्तिनिमित्तपरिच्छेद[४७२] इत्यर्थः । ननु शाब्द उक्तरूपज्ञानेऽतिव्याप्तिरिति[४७३] चेन्न । अतिदेशवाक्यार्थज्ञानकरणकप्रवृत्तिनिमित्तपरिच्छेद[४७४] उपमितिरित्यर्थे तात्पर्यात् । अगृहीतसमयेत्यादिपरित्यागेनाह किञ्चिदिति[४७५] । अतिदेशवाक्यार्थसमानाधिकरणज्ञानकरणकसंज्ञानिमित्तपरिच्छेद[४७६] उपमितिरित्यर्थः । ननु[४७७] वैधर्म्यज्ञान-

धिकरण्येन संज्ञानिमित्तप्रकारतापरिच्छेदो वा। 'गोविसदृशो न गवयः' इत्यत्रापि परम्परया तत्र तात्पर्यमस्त्येवेति सर्वमवदातम्।

इति महामहोपाध्यायगङ्गेशविरचिते तत्त्वचिन्तामणौ
उपमानाख्यं तृतीयं खण्डं समाप्तम्।

---

सादृश्यज्ञाने उभे उपमितिकरणे, तत्र केन रूपेण[४७८] कारणतेति चेत्, अज्ञातसमय-संज्ञासमयपरिच्छेदतात्पर्यककिञ्चिदतिदेशवाक्यार्थनिश्चयत्वेन[४७९] तत्र[४८०] कारणतेति दिक्।

इति श्रीमत्प्रगल्भकृतोपमानसङ्ग्रहः[४८१] समाप्तः[४८२]।

## VARIANTS

१. ०प्रामाण० B C

२. उपमानतावच्छेदेन B

३. शब्दस्योपजीव्यता० B

*. ०परिच्छेदकशब्दकत्वादिति A

४. स्वाभिप्रेतं मतं C

+. ०मेवोपेयमिति A

५. ०मीमांसकीयं मतं B

६. धर्मिसिद्धावेवातिरेकचिन्तेति तं साधयति is omitted by A.

७. A omits सादृश्यमिति कृत्वा.

८. द्रव्यगुणादिभिन्नमिति मूलग्रन्थार्थः B C

९. सदृशत्वव्यवहारं B

१०. कारयति B C

११. ०सादृश्यव्यवहारः B C

१२. न यथा A

१३. ०धर्मास्तैर्व्यञ्जकै० A

१४–१५. भवदुक्तयुक्तेरनेकमेव B C

१६. ०भाने A

१७. ०मुपमीयेतेत्याशङ्क्यां A

१८. स्यात् B C

१९. A B omit.

२०. स्ववृत्तिविरोधे A

२१. गौसदृशीति C ; सदृशीति A

२२. घटोपलक्षितसंयोगवान् A C

२३. इति B ; इत्युक्ते A

२४. तद्विशेष्यकत्वस्याननुगतत्वाद् A

२५. सादृश्यव्यवहारो A

२६. उभयसंयुक्त० A

२७. A omits इह प्रत्यक्षत्वे वेति.

२८. गोगवयसादृश्यैकवित्ति० A

२९. A omits.

३०. A gives यदि सन्निकर्षो बलात् in the place of यदि सन्निकर्षं विना.

३१. प्रतीयेतेत्याशयात् B

३२. तत्सादृश्यपदेति B

३३. सप्तपदार्थभिन्नत्व० B C

३४. तादृशं व्यवहारादिकं B C

३५. सप्तपदार्थभिन्नत्वं B C

३६. C omits इति.

३७. स्यादित्यत्रापि A

३८. सदृशत्वापत्ति० B

३९. तत्परम्परा० B C

४०. तदवयवादिभूयःसामान्याज्ञानान्न A ; ०सामान्यादिज्ञाने निकटस्थेऽपि B

४१. सदृशेन B C

४२–४३. तत्र सादृश्यप्रत्यय इत्यर्थः। ननु कथमवयवादिसामान्यानां बहुत्वात् सादृश्यमित्येकं वनेऽपि इत्यत A

४४ सन्निवेशसहिताः प्रासादा A ; ०प्रासादो B C

४५. A omits.

४६. A omits.

४७–४८. न सामान्यं A

४९–५०. प्रकाशितसादृश्यं A ; प्रकारितं सादृश्यं C

५१. अतिशयितविलक्षणं A

५२–५३. गुणत्व० A ; गुणादावयवसामान्यस्य तत्रापि सत्त्वादित्यर्थः C

५४. सदृशव्यवहार A (everywhere we find 'सदृश' for 'सादृश').

५५–५६. उक्ताननुगमे संवादमाह....जात्यादीनामेकैकभेदात् सामस्त्यभेदादित्यर्थः C ; A omits.

५७. च तद्विरोधः A

५८. साधकमवधेयम् B

५९. हस्तिमशकादिस्थले B

६०. B omits.

६१. धर्ममात्रपरम् A

६२. निष्प्रयोजकत्वदूषणसङ्गतिः A

६३. तद्गतधर्मवत्त्वज्ञाने A

६४. व्यावर्त्तकधर्मघटितं A

६५. स्वप्रतियोगी A

६६–६७. अनुपदोक्तं दोषोद्धाराय शङ्कते भेदश्चेति A ; अनुपदोक्तदोषोद्धाराय शङ्कते B

६८–६९. गवयस्वरूपमाश्रयमभिप्रेत्य वा इदं वाच्यम् A

७०–७१. भूयस्त्वमन्यपक्षोक्तदूषणानि विहायान्यद् A ; भूयस्त्वसामान्यपक्षोक्तदूषणान्यविधायान्यद् B

७२. चेत् न B

७३. B omits.

७४. भेदघटितभूयःसामान्यवत्त्वं A

७५. तद्धर्ममात्रम् A

७६. बाधमाह C

७७. तथाबुद्धिव्यपदेशोपादनमिति चेन्न C ; तथाबुद्धिव्यपदेशोपादानमिति चेत् B

७८–७९. तत्र अतद्वत इति मते इदम् A

*. सिद्धः omitted by B.

८०–८१. Here in A the line is broken and the matter is not readable.

८२. तत् A

८३. विरुद्धनामुक्तिमात्रविरोध A

८४. आक्षिप्तं A

८५. सामान्यवद् A

८६–८७. विपक्षबाधकमाह B C

८८. अथेति B

८९. सुलभत्वेनानासत्त्वादिति B C

९०. असाधारणान्यमत्र तद्गतभूयोधर्मवत्त्वं A ; असाधारणान्यमात्रभूयोधर्मवत्त्वं B

९१. तदित्यर्थः A ; तदित्यर्थात् B

९२. ०सादृश्यमधिकेत्यपास्तम् A

९३ पञ्चम्यभिधीयमानप्रतियोगित्वं B

९४. मन्तम् A

९५. न A

९६. भावमादाय A

९७. भूयः यदा A

९८. तस्यैव A

९९. साध्यसाधवत्तेति C

१००. साधनवत्तयोर्धर्मयोर्बहुत्वाभावात् A

१०१. त्रिचतुरसाधारणमिति B ; त्रिचतुरादिसाधारणमिति C

१०२. एकभिन्नतात्पर्यकत्वात् A

१०३. नन्वनुगतमिति B C

१०४. सादृश्यपदयो A ; तर्हि सादृश्यपदमेव B

१०५. गवयशब्दवाच्यतापत्तिः B C

१०६. बाधकत्वादितिभावः A

१०७. अननुगतदोषोद्धारभारो A C

१०८. अभिसन्धिमुद्घाटयन् B C

१०९. A omits.

११०–१११. A omits.

११२–११३. सादृश्याभावे ···· वाच्यम्, तवापि सादृश्य व्याप्त्यवमात्रेण नानुगमः, किन्तु तत्र सादृयव्याप्यत्वेन अन्यथा C ; A omits.

११४. यज्ञदत्तसादृश्यव्याप्यज्ञाने B C

११५–११६. एवञ्चानुगम एव A ; तथा स एवाननुगम इत्यत्र तात्पर्यात् B

११७. सादृश्या A

११८. इत्यर्थः A

११९. अनुभवविरोधमुपपादयति B

१२०. Line broken in A ; ०अपरदूषणमाह B C

१२१. तद्गतभूयोधर्मवत्त्वस्य B

१२२. ०सत्त्वान्नोक्त B

१२३–१२४. चेन्नेति आह A

१२५–१२६. पूर्वोक्तं साङ्कर्यं निराकरोति A

१२७. तत्रेति A

१२८. तत्राभाने B C

१२९. अभेदो B C

१३०. भेदो B

१३१–१३२. A omits.

१३३. तथारूपमिति C

१३४. A omits ; तत्ता B

१३५. नन्विति B C

१३६. यद् यत्र B C

१३७. गोव्यक्त्यन्तरे A

१३८. गोत्वस्य सम्बन्धावगमाद् A

१३९. तद्गतं बहुत्वं A ; तद्गतत्वं B

१४०. एतद् गोवृत्तीति B ; एकतद्गोवृत्तीति C

१४१. एव A C

१४२. यदि B C

१४३. ०गोत्वाद्यभावसम्बन्धिन्युक्तज्ञानं A

१४४–१४५. शृङ्गादिमानयं A

१४६. अभेदे B ; प्रयोगोभेदे C

१४७. A omits.

१४८. इति B

१४९. प्राभाकरा नवीनाः A

१५०–१५१. ग्राह्यमित्यत्रापि मते नान्यथासिद्धिरिति A

१५२. भावः A

१५३. यज्ञदत्तत्वदेवदत्तत्वं A

१५४. मूलत्वादिति B C

१५५–१५६. अनेकसाधारणधर्मसत्त्वेन एकासाधारणधर्मेण सुसदृशव्यवहारसिद्धेरिति A ; अनेकसाधारणधर्मसत्त्वेन एकासाधारणधर्मेण सुसदृशत्वव्यवहार-सिद्धेरिति B

१५७. देवदत्तादिरेवेति C

१५८–१५९. A omits.

१६०. अपि A

१६१–१६२. व्यञ्जकापेक्षावश्यशब्दत्वेनैवान्यथासिद्धिः A ; व्यञ्जकापेक्षाया आवश्यकत्वे तेनैवान्यथासिद्धिः B

१६३. सादृश्यमेवमिति A

१६४–१६५. वैसादृश्याद् गवये A

*. किमिति न omitted by B.

‡. वैसादृश्यं omitted by B.

१६६. परिहारमाह A

१६७. व्यञ्जकत्वस्यावश्यं A

१६८. यद्वेति A

१६९–१७०. Omitted by C.

१७१. सादृश्यस्येव C

१७२–१७३. नाभेद B

१७४. इत्यादेः B C

१७५. ०भिप्रायकमेतत् B C

१७६. मत इदं B C

१७७. आह्लादकत्वादिना B C

१७८–१७९. न प्रयोगः नुक्त्येति चेन्न A ; प्रयोगो न स्यात् पौनरुक्त्यादिति चेन्न B

१८०–१८१. जिज्ञासां पुरस्कृत्य विशेषेणोक्तादोषात् B ; जिज्ञासायां पुरस्कृत्याविशेषेणोक्ताच्च दोषात् C

१८२–१८३. स्यादतिरिक्तं सादृश्यमिति प्राह A

१८४. लक्षणा इति B C

१८५. चेन्न B

१८६. पूर्वत A

१८७. प्रवृत्तौ B

१८८. मुख्यत्वमपि B

१८९. Omitted by A.

१९०. पदार्थान्तरत्वेन A

१९१. प्रकृतभेदपरत्वे A

१९२. वक्ष्यति C

१९३. उक्तमुपसंहरति A

१९४. समानसंवित्संवेद्यता B

१९५. न सम्भाव्यते A

१९६. व्याप्तिग्रहणं B

१९७–१९८. विनैव भूता धातास्ति इत्यग्रे A ; विनैव तादृशधी नास्तीत्यग्रे B

१९९–२००. सामान्यव्याप्तिविशेषणीभूतमवयवसादृश्यज्ञानं A

२०१. तव मते B C

२०२. सादृश्यज्ञानाभावात् C

२०३. सदृशमेवोपमेयमित्युक्तं A

२०४. विशेष्येति B C

२०५–२०६. तल्लिङ्गस्येति प्रतियोगित्वसाधकलिङ्गस्य A ; तल्लिङ्गस्य तत्साधक-लिङ्गस्य B ; तल्लिङ्गस्य तत्प्रतियोगित्वसाधकलिङ्गस्य C.

२०७. अत एव A

२०८. साध्यप्रसिद्धिः एतद्भिन्नत्वे A

२०९. हेतोर्विशेषणमत्र A

२१०–२११. न वातिरिक्तसादृश्याभावेनोक्तहेतुग्रहकालेऽसिद्धिर्गवये A

२१२–२१३. च भावान्नानुमितिरिति A

२१४. गम्यतामपि B C

२१५. यन्मानगम्यं A

२१६. गवयता A

२१७. तदनेन A ; धनवानेन C

२१८. न्यायेनान्यत्र B

२१९. A omits.

२२०–२२१. ...प्रागस्तितेति....सादृश्येनैव A

२२२–२२३. तवापि करभव्यावृत्तधर्मवत्त्वं वैधर्म्याभावो A ; तस्यापि करभव्या-वृत्तधर्मवत्त्वं वैधर्म्यं भावो B

२२४. चेत् B

२२५-२२६. सादृश्यमित्युपलक्षणं A

२२७. वैधर्म्यमिति A

२२८. एतद्भाने B C

२२९. समानसंवित्संवेद्यत्वमिति B C

२३०. गवयसादृश्यस्य ज्ञानेनाविषयीकरणादिति C

२३१–२३२. एतद् B

२३३. ०रन्यथोपपादयितुं शक्यत्वात् A

२३४–२३५. परस्परनिस्तार A ; परस्य न निस्तार B

२३६. घटसन्निकर्षेण सन्निकृष्टपटग्रहणप्रसङ्ग A ; घटसन्निकर्षेणासन्निकृष्टपट-ग्रहप्रसङ्ग B

२३७. भेदाघटितं B

२३८. सादृश्यमसन्निकृष्टं B C

२३९–२४०. भायादित्यत B C

२४१–२४२. न भेदघटितसादृश्यं B C

२४३. ०रूपाभावादप्रामाण्यापत्तिरित्यत A

२४४. अत्र आहुरिति B C

२४५. प्रतियोगित्वादिति A B

२४६. चेन्न A

२४७. हेतोर्विशेष्यरूपेणज्ञाने A ; हेतोर्विशेष्यगोरूपेण B

२४८. तादृशधीजननसमर्थतेति B C

२४९–२५०. हि प्रतीतौ B C

२५१. समानसंवित्संवेद्यतया A

२५२–२५३. तत्सादृश्याप्रतियोगित्वमपि भानम् B ; तत्सादृश्यप्रतियोगित्वस्यापि भावात् C

२५४. B C omit.

२५५–२५६. व्यतिरेकानुमानेन B C

२५७–२५८. व्याप्यत्वादिज्ञानं A

२५९–२६०. विनाप्युक्तरूपं साध्यज्ञानं न A ; विनोक्तरूपसाध्यज्ञानं B C

२६१–२६२. यत्रानुमानावसरस्तत्र तदेव A

२६३–२६४. नानुबन्धं A

२६५–२६६. स्यादित्याह A

२६७–२६८. सामान्यतोव्याप्तिरुक्तप्रदीयते A

२६९. A, C omit.

२७०. अत्रेदं बोध्यम् A C

२७१–२७२. परस्परप्रतियोगित्वं A

२७३. C omits.

२७४–२७५. नानुमानं न वोपमानम् A ; न चानुमानं न चोपमानम् B

२७६–२७७. B omits.

२७८. गवयनिष्ठसादृश्यप्रतियोगित्वादित्येव A ; गवयनिष्ठसादृश्यप्रतियोगित्वादित्यत्र B

२७९–२८०. A omits.

२८१. महिषादौ A

२८२. सादृश्यान्तेन .... गतो A

२८३. व्यभिचारवारकस्यादिति A

२८४. परकीयोपमानस्य रूपं A ; उपमानस्वरूपं B

२८५. परमते तत्फलञ्च B

२८६. कीदृग् B C

२८७. अथ A

२८८–२८९. प्रमाणान्तरविलक्षणप्रकारः A

२९०. सामग्रीभेदे च A

२९१. उपमितिफलमिति A

२९२. परो बुद्ध्वा B ; A omits.

२९३–२९४. नन्विति B

२९५. स्ववाच्योपलक्षकम् A

२९६–२९७. गवयशब्दवाच्यतापरिच्छिन्नः A ; गवयशब्दवाच्यतां परिच्छिन्दतः B

२९८. A B omit.

२९९. गवयः A

३००. प्रत्यभिज्ञानास्तीति B

३०१–३०२. केवलं शब्दाद् गवयशब्दवाच्यताधीर्गवयत्वस्य प्रवृत्तिनिमित्तत्ववधारणादिति बाधः A ; केवलशब्दान्न तथा धीः, गवयत्वस्य प्रवृत्तिनिमित्तता च धारणादिति भावः B

३०३. व्यभिचारे A

३०४–३०५. प्रत्येकविश्रान्तमित्यर्थः A ; प्रत्येकं विश्रान्तं B

३०६–३०७. फलानेकत्वमिति C

३०८. फलानेकत्व इति। प्रमाणत्वं हि प्रत्येकविश्रान्तं this portion is omitted by B.

३०९–३१०. समाहार दण्डादिवन्न A

३११–३१२. Line broken in A ; ०प्रत्यक्षस्य तत्र कारणत्वे B

३१३. तदनुस्मृतिद्वारा A

३१४. Line broken in A.

३१५–३१६. प्रत्यक्षेणान्तर्भवतीत्याह A

३१७–३१८. C omits.

*–+. न निर्विकल्पकं सविकल्पकफलकं A C

३१९. प्रवृत्तिः A

३२०–३२१. Line broken in A ; प्रश्नस्य तूत्तरं तत्तदिति० B

३२२–३२३. Line broken in A ; प्रत्यक्षप्रमाणबहिर्भाव इत्यर्थः क्वचिदंशे व्यापारं दृष्ट्वा शङ्कते अस्तीति। तस्मिन् सादृश्यज्ञाने तस्येन्द्रियसन्निकर्षस्य व्यभिचारादिति भावः B

३२४. इन्द्रियव्यापारे परमते A

३२५. ०सामग्री न A

३२६. ०विषयकोवोपमित्यभावप्रसङ्गात् इति A ; अतीन्द्रियादिधार्मिविषयको० B

३२७–३२८. प्रत्यक्षेण ···· प्रवृत्तिनिमित्तत्वात् ···· वाच्यम् A

३२९–३३०. प्रमाणत्वे स्थितिः A ; प्रमाणत्वव्यवस्थिते B

३३१. प्रकृतस्थले तूपमिति च विरोधात् ; प्रकृतस्थानेऽप्युपमितित्वाविरोधात् C

३३२. परिच्छेदो स्थिति A

३३३. अनुमिनोमीत्यनुव्यवसायवदुपमिनोमीत्यनुव्यवसायः स्यात् तुल्यतया A

३३४. प्रत्यक्षान्तरेऽन्तर्भाव A

३३५. इत्यादि C

३३६-३३७. ननु निन्दापरवाक्यस्य समयविशेषे तात्पर्याभावान्नोक्तं युक्तमिति वाच्यम्। तात्पर्याभावेऽपि तात्पर्यज्ञानेन प्रकारान्तरेण वाक्यार्थपरिच्छेदस्यानुभवसिद्धत्वात्। तात्पर्यसिद्धत्वे....इति भावः [This portion not given in B C in the very beginning as it is in

A. It comes afterwards as given in our text ]. न चेति । क्लृप्तप्रमाणसम्भवः ( क्लृप्तमानासम्भवः B )। अवलृप्तमतिरिक्तं प्रमाणं नोपेयते ( नोपपद्यते B ; नोपमेयते C )। परिशेषेण क्लृप्त-कारणोपमान एव तत्र प्रमाकरणभेदो....तत्रासम्भवं दर्शयति तत्र न तावदित्यादि....नाधिकरणं नैमित्तिकसंज्ञायामस्ति ; उपलक्षणन्तु शक्यपरिचायकमात्र......गीतं, एतदेव तटस्थमिति गीयते । एतदुभयमपि शृङ्गग्राहिकस्थले नास्ति तेन नैमित्तिकादेर्भेदः । शब्देन्द्रिययोर्भिन्नकालत्वेऽपि अर्थस्मृतिद्वारा शब्दस्य, सादृश्यधीद्वारा प्रत्यक्षस्य च कारणत्वे दाविव शृङ्गग्राहिकतेति ध्येयम् । इदमवधेयम् A ; न चेति० परिशेषेणोक्तप्रकारेणोपमान एव प्रमाभेदावक्लृप्तिरिति भावः ०वाक्यार्थपरिच्छेदानुभवसिद्धत्वात्० B.

३३८. शब्दाच्च A

३३९. गवयादिशब्दस्य च A

३४०. वाच्यत्वं A

३४१. एवविधा A

३४२–३४३ पारिभाषिकी सोपलक्षणा निमित्तं सङ्कोचवतीति A

३४४–३४५. शृङ्गग्राहिकतयेति ( शृङ्गग्राहिकयेति B )। प्रत्यक्षापेक्षया व्यक्ति-विशेषोपस्थितिर्यत्र सैव शृङ्गग्राहिकेत्यर्थः । निमित्तोपलक्षणे विना.... अस्तीति वैषम्यमप्याह । गत्यन्तरेति A

३४५–३४६. गत्यन्तरेति । उभयं देवदत्तवाचकमित्यत्र तत्त्वेदन्तावदत्रापि इत्यभि-प्रेत्यासम्भवमाह तत ( त C ) इति A

३४७–३४८. हेत्वन्तरमाह नापीति....समुदायशक्यभावे दूषणमाह अन्यथेति A

३४९. कृतियोग्यता C

३५०. सम्प्रदायमते A

३५१–३५२. योगाभावादिति । निमित्तकाः....चेति संकोचनादिति । तत्र गवयत्व-निमित्तपुरस्कारेणोपमानव्यवस्थापन........संज्ञायामुपमानं प्रकृतनिवेश-यितुमतया सां स्वरूपं निरुच्यते........। तथा च येनोपाधिकसंज्ञापीति भावः । अन्यथेति A

३५३. तद्रूपेण A

३५४–३५५. शक्तिः A

३५६–३५७. शब्दान्तरशक्तिग्रह A

३५८. तात्पर्यादाह A.

३५९. अन्योन्याश्रयादिति C

३६०. सो A

३६१–३६२. ....वव्याप्तिरेव बोद्धव्या A

३६३. C omits.

३६४. अप्रतीतगुणारण्यकानां A

३६५–३६६. शब्दादनुपस्थितेरित्यर्थः A

३६७. चायमुपदेष्टा A

३६८. इदमेव A

३६९. गवयत्वे च पुरस्कारेण A

३७०. भवितेत्यभिप्रायेण A

३७१. न उपलक्षणेति A

३७२. तात्पर्यसंशयेन A

३७३. सन्देहाविति C

३७४. गति A

३७५–३७६. चेत् । सत्यम् । संशयावशब्देत्यभिज्ञानं A

३७७. गवयचौप अनन्तरं A

३७८. तर्क इति A

३७९–३८०. उपलक्षणेति । पर्यवसित इति । प्रवृत्तिनिमित्तसंशयेऽपि गोसदृशो गवयपदवाच्य इति वाक्यस्यान्वयबोधजनने योग्यत्वेन पर्यवसितत्वेन निराकाङ्क्षत्वादिति भावः A

३८१–३८२. संशययोग्यता तत्रोपमानस्य मानान्तरता भवतां मतेऽपि दुरपनेयेत्यपि अधिकं... A

३८३. 'दूषणं परं प्रति बोध्यम्'—this portion is not readable in A.

३८४. वाक्यभेदापत्तिः .... A

३८५–३८६. A omits.

३८७. Not readable in A.

३८८. गवयपदवाच्यत्वात् A

३८९. सत्प्रवृत्तिनिमित्तस्य A

३९०. सादृश्यप्रवृत्तिनिमित्तस्य गौरवादिना सादृश्यप्रवृत्तिनिमित्तत्वाभावे A

३९१. गवयन्वप्रवृत्तिनिमित्तं A

३९२. कल्पनापि A

३९३–३९४. यदि चेति। वस्तुतस्तु प्रतीतार्थानुपपत्तित्वामनुमानं वाक्ये निमित्तं ....
.... भवतीति वाच्यम् A

३९५–३९६. ...... मासवन्वयानुपपत्तिः स्यात् पर्यानुपपत्त्यैव लक्षणादिति A

३९७. व्युत्पादनपरामित्यर्थः A

३९८–३९९. इत्येवं वाक्यं वदन्यं लभ्येत लक्षणावदस्तीत्याह न चात्रेति A

४००. A omits.

४०१. भावः A

४०२. प्रतीत .... सतीत्यत्र A

४०३. साक्षात् A

४०४–४०५. नोक्ततात्पर्यकमतिदेशवाक्यं ........ देवफलं सादृश्यमात्रम्, तात्पर्यकम् A

४०६–४०७. प्रवृत्तिनिमित्तविशिष्टविषयगवा तथा च सादृश्य० A

४०८. तादृशान्वयानुपपत्तिप्रतिसन्धानमन्तरेण A

४०९–४१०. वाच्यतापरिच्छेदस्तत्रोपमानत्वाविरोधात् A

४११–४१२ तात्पर्यव्याप्यत्वेनानुगमाभावे शाब्दबोधे अनुगमेन A

४१३–४१४. चेन्न। आकाङ्क्षादिनिश्चयस्येव A

४१५ कारणत्वाभिप्रायेण .... A

४१६. शाब्दबोधे तु अदोषात् A

४१७. प्रवृत्तिस्त्वभिप्रायज्ञानं परम्परयापेक्षते A

४१८. अत एवोक्त A

४१९. बालादिवाक्ये

४२०–४२१. तात्पर्याभावनिश्चये ........ शाब्दधीति A

४२२. सामान्यव्याप्तिअनुमानपरिच्छेद्य० A

४२३. तत्र A

४२४. A omits.

४२५. A omits.

४२६. A omits.

४२७. स A

४२८. यत्र निश्चित A

४२९. वाससी A

४३०–४३१. तत्सिद्धेरित्यर्थः A

४३२. प्रमाणसहकारिवृत्तित्वादिति A

४३३–४३४. ननु A

४३५. प्रसङ्गात्मकत्वे A

४३६–४३७. लाघवस्य व्यतिरेक्यनुमानत्वाभावादित्यर्थः C

४३८. अयं A

४३९. भवदुक्तमानातिरिक्तमानत्वं A

४४० तथास्तीत्यर्थमुपमानं A

४४१. केवलव्यतिरेकिंनादिति A

४४२. न च अष्टनाश्रयत्वं A

४४३. विशेषबाधकानामेवं A

४४४–४४५. ननु A

४४६. अथेति A

४४७. विशेषणद्वयोरिति A

४४८. सप्तद्रव्यानाश्रितत्वरूपविशिष्टाष्टमद्रव्यानाश्रितत्वात् तस्य विशिष्टद्वयोपस्थित्यैव A

४४९. नेतरप्रवृत्तिनिमित्तकत्व० A

४५०. A omits.

४५१. तदा ········ हेतोरित्या ····· प्रवृत्तिनिमित्तत्वरूपविशेषणासिद्धिः

४५२–४५३. गोसदृशज्ञानातिदेशवाक्यार्थस्मरणे सत्येव A

४५४–४५५. लाघवाख्यतर्कावतारेण यत्र गवयत्वप्रवृत्तिनिमित्तत्वेन गवयशब्दवाच्यतापरिच्छेदः स उपमितिस्तत्करणमुपमानं पृथगित्यर्थः। न चेति। तथा च लाघवाख्यतर्कसहकारेण गवयत्वे प्रवृत्तिनिमित्तत्वनिश्चय इति शङ्कात् ··········· A

४५६–४५७. अतिदेशवाक्यानां तत्पूर्वं A

४५८. गवयपदवाच्यं A

४५९–४६०. प्रवृत्तिनिमित्तप्रश्ने A

४६१. उपलक्षणमिति C

४६२. A omits.

४६३–४६४. A omits.

४६५–४६६. चान्यानिमित्तकत्वनिश्चयस्यावश्यकत्वात् ········ व्यतिरेकिण A

४६७. A omits.

४६८. अन्यनिमित्तकत्वपरित्यागे A

४६९. अथ शङ्कते A

४७०–४७१. नान्यप्रवृत्तिनिमित्तमिति A

४७२. वाच्यम्, सहकारेण A

४७३–४७४. सामान्योदृष्टलाघवेन A

४७५. धीरिति A

४७६. उक्तत्वादिति A

४७७. तदभावात् A

४७८–४७९. गवयत्वावच्छेदेनापि A

४८०–४८१. गवयत्वे शक्यतावच्छेदकत्वालाभादेव समत्वानेऽपि A

४८२. A omits.

४८३. व्यवहारेण A

४८४. वदति A

४८५. उपमितिरिति A

४८६–४८७. तदेति A

४८८. मध्यस्थितानामव्याप्तिर्बहिःस्थितानामतिव्याप्तेः A

४८९. गौरवादेव A

४९०. परिशेषादवशिष्टे गोत्वादिनिमित्ततेति A

४९१–४९२. धर्मोक्त यत्र व्यवहारः A

४९३. न तु A

४९४. कथञ्चिदुपसंहारव्याजेन A

४९५. व्यक्तेर्वाच्यत्वज्ञानादेव A

४९६. लाघवात् तर्कसहकाराच्च A

४९७–४९८. शक्तिग्राह ······· यति A

४९९. यत् A

५००–५०१. तटस्थीकृत्योक्तावेव A

५०१–५०२. तत्रोपमानं A

५०३–५०४. ०व्यवहर्त्तव्याताज्ञानमात्रमनुमितौ A

५०५–५०६. तथा समव्याप्तेरग्रहादिति A

५०७. जनयतीति न A

५०८–५०९. नन्वोत्तर इत्यादिकं A

५१०. तेषामननुगतत्वादिति A

५११. A omits.

५१२. हेत्वाभासलक्षणे उक्तत्वात् A

५१३. सिद्धसाध्यसमभिव्याहारेण सिद्धं ये साध्यायोपयुज्यते A

५१४. शक्तिग्रहो A

५१५. नानेकशक्तिग्रहो A

५१६. व्यक्त्यन्तरे त्ववबोधः A

५१७. पदस्य A

५१८. पदार्थान्तरवैधर्म्यात् A

५१९ इष्टत्वादिकमात्मत्वादिकं A

५२०. Added by editor.

५२१. स्वरूपसहकारिशक्तिग्राहकमित्यपि A

५२२. बुद्धिस्थत्वादिप्रकारित्वाप्रतीतेः A

५२३–५२४. एवञ्च इदमनुगतरूप० A

५२५–५२६. तेनानुगमो A

५२७. Noι readable in A.

५२७–५२८. अन्त्येऽननुगमस्तद्वच्चेति चेत् A

५२९. पदान्तरशाब्दबोधेनाजजन्यशाब्दबोधपेक्षा A

५३०. वृत्त्यानुपस्थितमपि A

५३१. यत्पदेषु A

५३२–५३३. जन्यत्वेन A

५३४–५३५. आत्मत्वादिपदेषु A

५३६. तथा आत्मत्वादिनोपस्थितिः सहकारः A

५३७. स्वरूपेण A

५३८. स्वरूपसहकारीति C

५३९. शक्तावर्थलाभो A

५४०. बुद्धिस्थत्वं विषयतावच्छेदकं तत्तद्रूपेण A

५४१–५४२. बुद्धिस्थत्वाद्यवगतरूपेण शक्तिग्रहे A

५४३. तत्तद्विशेषे A

५४४. विशेषपर्यवसान नियम इति प्रसङ्गादित्यर्थः A

५४५. तत्पदसाधर्म्ये च A

५४६. चैत्रमातुः प्रतीतिरस्ति A

५४७. शक्तिः A

५४८. मातृशब्द A

५४९. आकाङ्क्षासत्त्वेन A

५५०–५५१. .......योग्यता नापव्यावृत्तेः A

५५२. पदार्थैकशक्यत्वेन A

५५३–५५४. विशेषणाभिव्याहृतवाक्यार्थस्थ अनुसन्धानरूपेतरप्रमाणविलक्षणसामग्रीभेदेन फलवैजात्यवश्यकत्वादित्येव निर्वाहको हेतुरित्याह करणत्वमिति A

५५५. सास्नादिवदियं A

५५६. एतज्ज्ञानेऽपि A

५५७. उपमितित्वानुव्यवसायस्तथापि A

५५८. संज्ञा वा........ A

५५९. नियतधर्मसमानाधिकरणासु A

५६०–५६१. असाधारणकारकं प्रवृत्तिनिमित्तपरिच्छेदकमुपमितिरित्यर्थः A

५६२. न तु उपमितित्वजातेरभावे C

५६३. उपमानो........अनुव्यवसायाभावप्रसङ्गात् A

५६४–५६५. उक्तलक्षणात् उक्तलक्षणस्यातीन्द्रियत्वेनानुव्यवसायाविषयत्वादिति व्यवहारः .......... A

५६६–५६७. अतिव्याप्तिरिति A

५६८. शक्यतावच्छेदकत्वं A

५६९. आचार्यस्तात्पर्यविषयीकृतं लक्षणमाह A

५७०–५७१. अतिदेशवाक्यतो गोसादृश्यादिसामानाधिकरण्येनाज्ञातसमयगवयपदादेः A

५७२. प्रवृत्तिनिमित्तपरिच्छेदिका A

५७३. उक्तज्ञानेऽतिव्याप्तिरिति A

५७४. अतिदेशवाक्यार्थज्ञानकरणकप्रवृत्तिनिमित्त A

५७५–५७६. अगृहीतसमयेत्यादि . . . . . . . . . . . . . . . परित्यागेनाह . . . . . . . . . . . अतिदेशवाक्यार्थसमानाधिकरणकसंज्ञानिमित्तपरिच्छेदिका A

५७७–५७८. अनु . . . . . . . . . . . . . . . . . . सादृश्यज्ञाने . . . . . . . . . . . . . . . . . उपमितिकरणस्वप्रकारेण रूपेण A

५७९–५८०. ०परिच्छेदतात्पर्यककाश्चिदतिदेशवाक्यार्थनिश्चयत्वेन A

५८१–५८२. इति श्रीप्रगल्भकृतोपमानवङ्ग्रहः समाप्तः। शुभमस्तु सर्वेषाम्। संवत् १८४३ वर्षे। A